पातालमिव तज्ज्योतीरूपं ब्रह्म । यत्र गत्वा न निवर्तेत तमदृष्ट्वाऽसत्कर्मभिः किम् ॥ १३ ॥ रजआदिगुणैर्युक्तबुद्धेर्विवेकमदृ० अ० ॥ १४ ॥ बुद्धिसंगभ्रंशितैश्वर्यं संसरंतं जीवमज्ञात्वा अ० ॥ १५ ॥ उत्पन्ननाशकरीं मायामदृ० अ० ॥१६॥ पंचविंशतितत्त्वानां यः आश्रयस्तं न जानतः

पुमान्नैवेति यद्गत्वा बिलस्वर्गं गतो यथा ॥ प्रत्यग्धामाऽविद इह किमसत्कर्मभिर्भवेत् ॥ १३ ॥ नानारूपात्मनो बुद्धिः स्वैरिणीव गुणान्विता ॥ तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥ तत्संगभ्रंशितैश्वर्यं संसरंतं कुभार्यवत् ॥ तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १५ ॥ सृष्ट्यप्ययकरीं मायां वेलाकूलांतवेगिताम् ॥ मत्तस्य तामविज्ञस्य किमसत्कर्मभिर्भवेत् ॥ १६ ॥ पंचविंशतितत्त्वानां पुरुषोऽद्भुतदर्पणम् ॥ अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १७ ॥ ऐश्वरं शास्त्रमुत्सृज्य बंधमोक्षानुदर्शनम् ॥ विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् ॥ १८ ॥ कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्षयज्जगत् ॥ स्वतंत्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥१९॥ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् ॥ कथं तदनुरूपाय गुणविश्रंभ्युपक्रमेत् ॥ २० ॥ इति व्यवसिता राजन्हर्यश्वा एकचेतसः ॥ प्रययुस्तं परिक्रम्य पंथानमनिवर्तनम् ॥ २१ ॥ स्वरब्रह्मणि निर्भातहृषीकेशपदांबुजे ॥ अखंडं चित्तमावेश्य लोकाननुचरन्मुनिः ॥ २२ ॥

अ० ॥ १७ ॥ ईश्वरप्रतिपादकं शास्त्रं बंधमोक्षानुदर्शनमज्ञात्वा अ० ॥ १८ ॥ कालचक्रं भ्रमणात्मकं जगदाकर्षकमज्ञात्वा अ० ॥ १९ ॥ शास्त्ररूपपितुरादेशमात्मबंधनं न वेद सः ॥ २० ॥ एकचेतसस्ते एवं विचार्य नारदं परिक्रम्याऽपुनरावृत्तिं मार्गं ययुः ॥ २१ ॥ नारदो वीणां क्वणयन् हरिं ध्यायन् विचचार ॥ २२ ॥

१ नश्वरस्वर्गादिसाधनैः । २ अशांतेः । ३ अजानतः । ४ बुद्ध्यविवेकप्राप्तैः। ५ वेलाकूलं प्रवाहपतितानां निर्गमस्थानं तपोविद्यादि तस्यान्ते समीपे वेगितां निर्गमप्रतिबंधाय क्रोधाहंकारादिभिः कृतवेगाम् । ६ मायिकैः । ७ मिथ्यास्वातंत्र्यकृतैः । ८ बहिर्मुखैः । ९ फलस्य नित्यबुद्ध्या काम्यकर्मानुष्ठाने वैगुण्यबाहुल्यात्साद्भिः । १० द्वितीयजन्महेतोः । ११ निवृत्त्यनुरूपाय । १२ गुणमयप्रकृतिमार्गविश्वासवान् ।

ततो दक्षो नारदात् पुत्राणां नाशं निशम्य सुप्रजां शोचन् दुःखी बभूव॥२३॥पुनर्ब्रह्मणा सांत्वितो दक्षः शबलाश्वसंज्ञान् सहस्रं पुत्रान् जनयामास ॥ २४ ॥ तेऽपि प्रजासर्गे पित्राऽऽदिष्टाः संतो नारायणसरःआजग्मुः ॥ २५ ॥ ते तत्र सरसि स्नात्वा ब्रह्म जपंतपस्तेपुः ॥ २६ ॥ अब्भक्षाः वायुभोजनाश्च संतो हरिं पूजयंतः इम जगुः ॥ २७ ॥ ॐनमो नारायणायेत्यादि ॥ २८ ॥ हे नृप ! तानपि नारदः एत्य पूर्ववत्कूटान्युवाच

नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् ॥ अन्वतप्यत कः शोचन् सुप्रजास्त्वं शुचां पदम् ॥ २३ ॥ स भूयः पांचजन्यायामजेन परिसांत्वितः ॥ पुत्रानजनयद्दक्षः शबलाश्वान् सहस्रशः ॥ २४ ॥ तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः ॥ नारायणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः ॥ २५ ॥ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ जपंतो ब्रह्म परमं तेपुस्तत्र महत्तपः ॥ २६ ॥ अब्भक्षाः कतिचिन्मासान् कतिचिद् वायुभोजनाः ॥ आराधयन्मंत्रमिममभ्यस्यंत इडस्पतिम् ॥ २७ ॥ ॐनमो नारायणाय पुरुषाय महात्मने ॥ विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ २८ ॥ इति तानपि राजेंद्र प्रतिसर्गधियो मुनिः ॥ उपेत्य नारदः प्राह वाचः कूटानि पूर्ववत् ॥२९॥ दाक्षायणाः संशृणुत गदतो निगमं मम ॥ अन्विच्छतानुपदवीं भ्रातॄणां भ्रातृवत्सलाः ॥ ३० ॥ भ्रातॄणां प्रायेणं भ्राता योऽनुतिष्ठति धर्मवित् ॥ स पुण्यबंधुः पुरुषो मरुद्भिः सह मोदते ॥ ३१ ॥ एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ॥ तेऽपि चान्वगमन् मार्गं भ्रातॄणामेव मारिष ॥ ३२ ॥ संध्रीचीनं प्रतीचीनं परस्यानुपथं गताः ॥ नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ॥ ३३ ॥ एतस्मिन् काल उत्पातान् बहून् पश्यन् प्रजापतिः ॥ पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥ ३४ ॥

॥२९॥ हे शबलाश्वाः ! भ्रातॄणां पदवीं विलोकयत ॥ ३० ॥ यो भ्रातृवर्त्मानुगच्छति स मरुद्भिः सह मोदते ॥३१॥ एवमुक्त्वा नारदो ययौ ते भ्रातॄणां मार्गं जग्मुः ॥३२॥ अद्यापि न निवर्तंते ॥३३॥एतस्मिन् काले दक्षो बहूनुत्पातान् पश्यन् पूर्ववत नारदकृतं पुत्रनाशं शुश्राव ॥३४॥

---

१ उपदेशम् । २ समीचीनम् । ३ प्रत्यग्वृत्तिलभ्यम् । ४ गताः ।

ततः क्रोधेन स्फुरिताधरो दक्षः आगतं नारदं जगाद ॥ ३५ ॥ अहो असाधो ! त्वया साधुरूपेण बालानां भिक्षोर्मार्गो दर्शितः ॥ ३६ ॥ त्रिभिर्ऋणैरमुक्तानामुभयोर्लोकयोर्विघातः कृतः ॥ ३७ ॥ एवं त्वं निर्दयो बालानां मतिभित् निर्लज्जःसन् हरेः पार्षदमध्ये कथं चरसि॥३८॥ त्वां विना साधवो भूतानुग्रहकराः ॥ ३९ ॥ पुंसां स्नेहपाशदूरीकरणं विना वैराग्यं मृषा ॥ ४० ॥ यथा नरो विषयोद्भवं सुखदुःखानुभवं

चुक्रोध नारदायाऽसौ पुत्रशोकविमूर्च्छितः ॥ देवर्षिमुपलभ्याऽऽह रोषाद्विस्फुरिताऽधरः ॥ ३५ ॥ दक्ष उवाच ॥ अहो असाधो साधूनां साधुलिंगेन नस्त्वया ॥ असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥ ऋणैस्त्रिभिरमुक्तानाम मीमांसितकर्मणाम् ॥ विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥३७॥ एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः॥ पार्षदमध्ये चरसि यशोहा निरपत्रपः ॥ ३८ ॥ ननु भागवता नित्यं भूतानुग्रहकातराः ॥ ऋते त्वां सौहृदघ्नं वै वैरंकर मवैरिणाम् ॥३९॥ नेत्थं पुंसां विरागः स्यात् त्वया केवलिना मृषा ॥ मन्यसे यद्युपशम स्नेहपाशनिकृंतनम्॥४०॥ नानुभूय न जानाति पुमान् विषयतीक्ष्णताम् ॥निर्विद्येत स्वयं तस्मान्न तथा भिन्नधीः परैः॥४१॥यन्नस्त्वं कर्मसंधानां साधूनां गृहमेधिनाम् ॥ कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम् ॥४२॥ तंतुकृंतन यन्नस्त्वमभद्रमचरः पुनः ॥ तस्माल्लोकेषु ते मूढ न भवेद्भ्रमतःपदम् ॥४३॥ श्रीशुक उवाच ॥ प्रतिजग्राह तद्बाढं नारदःसाधुसंमतः॥एतावान् साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥ ४४ ॥ इति श्रीभागवते महापुराणे षष्ठस्कध नारदशापो नाम पंचमोऽध्यायः॥५॥

ज्ञात्वा पश्चाद् वैराग्यं प्राप्नोति तथा तदनुभवं न ज्ञात्वा परबोधेन न ॥ ४१ ॥ त्वयाऽस्माकमप्रियं कृतम् ॥ ४२॥ त्वया वंशच्छेदः कृतः । अतो लोके भ्रमतस्ते पदं स्थिरं न भवेत् ॥ ४३ ॥ श्रीशुक उवाच ॥ नारदःप्रतिशप्तुं समर्थोऽपि तच्छापं जगृहे ॥४४॥ इति श्रीभागवते चूर्णिकायां षष्ठस्कन्धे पंचमोऽध्यायः ॥ ५ ॥

१ जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् भवति ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः इत्युक्तप्रकारैः ।

षष्ठे दक्षेण सृष्टायां कन्याषष्ट्यां प्रकीर्तितः । पृथग्वंशो यतो जातो विश्वरूपो दितेः सुतात् ॥ १ ॥ श्रीशुक उवाच ॥ हे नृप ! ततो ब्रह्मणा सांत्वितो दक्षः षष्टिं कन्याः जनयामास ॥१॥ तत्र धर्मायदश १० कश्यपाय त्रयोदश १३ चंद्राय सप्तविंशतिः २७ भूताय द्वे २ अंगिरसे द्वे २ कृशाश्वाय द्वे २ तार्क्ष्यैति नामांतरं प्राप्ताय कश्यपाय चतस्रः ४ ॥ २ ॥ यासां प्रसवैस्त्रयो लोकाः आपूरिताः ॥ ३ ॥ धर्मपत्नीनामानि—भानुः १ लंबा २ ककुप् ३ जामिः ४ विश्वा ५ साध्या ६ मरुत्वती ७ वसुः ८ मुहूर्ता ९ संकल्पा १० इति । तासां पुत्रपौत्रान् शृणु ॥ ४ ॥ भानोर्देवऋ

श्रीशुक उवाच ॥ ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयंभुवा ॥ षष्टिं संजनयामास दुहितॄःपितृवत्सलाः ॥१॥दश धर्माय कायेंदोर्द्विषट् त्रिनव दत्तवान् ॥ भूतांगिरःकृशाश्वेभ्यो द्वेद्वे तार्क्ष्याय चापराः ॥२॥ नामधेयान्यमूषां त्वं साप त्य[illegible] मे शृणु ॥ यासां प्रसूतिप्रसवैर्लोका आपूरितास्त्रयः॥३॥भानुर्लंबा ककुब् जामिर्विश्वा साध्या मरुत्वती ॥ व [illegible]ल्पा धर्मपत्न्यः सुताञ्छृणु॥४॥भानोस्तु देवऋषभ इन्द्रसेनस्ततो नृप ॥ विद्योत आसील्लंबायास्ततश्च स्तन[illegible] ॥५॥ ककुभः संकटस्तस्य कीकटस्तनयो यतः ॥ भुवो दुर्गाणि जामेयः स्वर्गो नंदिस्ततोऽभ[illegible]॥६॥विश्वेदेवास्तु विश्वाया अप्रजांस्तान् प्रचक्षते॥ साध्यो गणस्तु साध्याया अर्थसिद्धिस्तु तत्सुतः॥७॥ मरुत्वांश्च [illegible]यंतश्च मरुत्वत्यां बभूवतुः॥ जयंतो वासुदेवांश उपेन्द्र इति यं विदुः॥८॥मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे ॥ [illegible] फलं प्रयच्छंति भूतानां स्वस्वकालजम्॥९॥संकल्पायाश्च संकल्पः कामः संकल्पजः स्मृतः॥ वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु॥१०॥द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः॥ द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः॥११॥

षभः । तस्येंद्रसेनः लंबायाः विद्योतः । तस्य स्तनयित्नवः॥५॥ ककुभः संकटः । तस्य कीकटः ततो दुर्गाभिमानिनो देवाः । जाम्याः स्वर्गः । ततो नंदिः ॥ ६ ॥ विश्वायाः विश्वेदेवाः तेऽप्रजाः । साध्यायाः साध्यो गणः । ततोर्थसिद्धिः । मरुत्वत्याः ॥ ७ ॥ मरुत्वान् जयंतश्च यमुपेंद्र विदुः ॥ ८ ॥ मुहूर्तायाः मौहूर्तिकाः देवगणाः ॥ ९ ॥ संकल्पायाः संकल्पः । ततः कामः । वसोरष्टौ वसवः । तेषां नामानि ॥१०॥ द्रोणः१ प्राणः २ ध्रुवः ३ अर्कः ४ अग्निः ५ दोषः ६ वसुः ७ विभावसुः ८ तेषां वंशाः । द्रोणस्याऽभिमत्यां हर्षशोकभयादयः आसन् ॥ ११ ॥

प्राणस्योर्जस्वत्यां सहः आयुः पुरोजवः । ध्रुवस्य धरण्यां विविधाः पुरः पुराणि ॥१२॥ अर्कस्य वासनायां तर्षादयः । अग्नेर्वसोर्धारायां द्रविणकादयः ॥ १३ ॥ अन्यस्यां कृत्तिकायां स्कंदः । तस्य विशाखादयः दोषस्य शर्वर्यां शिशुमारः ॥१४॥ आंगिरस्यां वसोर्विश्वकर्मा । तस्य चाक्षुषो मनुः । ततो विश्वे साध्याः ॥ १५ ॥ विभावसोरुषायां व्युष्टो रोचिरातपः इति । आतपाद् दिवसो जातः ॥१६॥ भूतस्य सरूपायां रैवतः १ अजः २ भवः ३ भीमः ४ वामः ५ उग्रः ६ वृषाकपिः ७ अजैकपात् ८ अहिर्बुध्न्यः ९ बहुरूपः १० महान् ११ ॥ १७ ॥ अन्यस्यां भार्यायां

प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः ॥ ध्रुवस्य भार्या धरणिरसूत विविधाः पुरः॥१२॥ अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ॥ अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥ स्कंदश्च कृत्तिकापुत्रो ये विशाखादयस्ततः ॥ दोषस्य शर्वरीपुत्रः शिशुमारो हरेः कला॥१४॥वसोरांगिरसीपुत्रो विश्वकर्मा कृतीपतिः ॥ ततो [illegible]श्चाक्षुषोऽभूद्विश्वे साध्या मनोस्सुताः ॥१५॥ विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ॥ पंचयामोऽथ भूतानि [illegible]न जाग्रति[illegible] ॥१६॥सरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः ॥ रैवतोऽजो भवो भीमो वाम उग्रो वृषाक[illegible] ॥१७॥ [illegible]र्बुध्न्यो बहुरूपो महानिति ॥ रुद्रस्य पार्षदाश्चान्ये प्रेतभूतविनायकाः ॥ १८ ॥ प्रजापतेरंगिरसः स्वधा पत्नी पितॄनथ ॥ अथर्वांगिरसं वेदं पुत्रत्वे चाकरोत् सती ॥ १९ ॥ कृशाश्वोऽर्चिषि भार्यायां धूम्रकेशमजीजनत् ॥ धिषणायां वेदशिरा देवलं वयुनं मनुम् ॥ २० ॥ तार्क्ष्यस्य विनता कद्रूः पतंगी यामिनी इति ॥ पतंग्यसूत पतगान् यामिनी शलभानथ ॥ २१ ॥ सुपर्णाऽसूत गरुडं साक्षाद्यज्ञेशवाहनम् ॥ सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥

भूतविनायकप्रेतादयः । ते एकादश रुद्राणां पार्षदाः आसन् ॥ १८ ॥ अंगिरसः स्वधापत्न्यां पितरः । अन्यस्यां सत्यामथर्वांगिराः नाम वेदो जातः ॥ १९ ॥ कृशाश्वस्यार्चिषि धूम्रकेशः । अन्यस्यां धिषणायां देवलः १ वयुनः २ मनुः ३ एते जाताः ॥ २० ॥ तार्क्ष्यस्य विनतायां गरुडोऽरुणश्च । कद्रूसंज्ञायां नागाः । पतंग्यां पक्षिणः । यामिन्यां शलभाः ॥ २१ ॥ २२ ॥

चन्द्रस्य कृत्तिकादयः स्त्रियः॥स दक्षशापात् क्षयरोगी चानपत्यश्च॥स दक्षं प्रसाद्य कलाः लेभे न पुत्रान्॥२३॥कश्यपपत्नीनामानि याभ्यो जगदुत्पन्नम्॥२४॥अदतिः१ दितिः २ दनुः३ काष्ठा४ अरिष्टा ५ सुरसा६ इला७ मुनिः ८ क्रोधवशा ९ ताम्रा १० सुरभिः ११ सरमा १२ तिमिः १३ ॥ २५ ॥ तिमेर्यादोगणः । सरमायाः श्वापदाः । सुरभेर्महिषादयो द्विशफाः॥२६॥ताम्राया गृध्राद्याः । मुनेरप्सरोगणाः । क्रोधवशाया दंदशूकादि सर्पाः ॥२७॥ इलायाः वृक्षाः । सुरसायाः राक्षसाः । अरिष्टाया गंधर्वाः । काष्ठायाः अश्वाद्याः एकशफाः ॥ २८ ॥दनोरेकषष्टिःसुताः । मुख्याः

कृत्तिकादीनि नक्षत्राणींदोः पत्न्यस्तु भारत ॥दक्षशापात् सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ॥ पुनः प्रसाद्य तं सोमः कला लेभे क्षये दिताः[1] ॥ २३ ॥ शृणु नामानि लोकानां मातॄणां शंकराणि च ॥ अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत्॥२४ अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला॥मुनिःक्रोधवशा ताम्रा सुरभिः सरमा तिमिः॥२५॥तिमेर्यादोगणा आसन् श्वापदाः सरमासुताः॥ सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ॥ २६ ॥ ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः ॥दंदशूकादयः सर्पा राजन् क्रोधवशात्मजाः ॥२७॥ इलाया भूरुहाः सर्वे यातुधाना[illegible]ः॥ अरिष्टायाश्च गंधर्वाः काष्ठाया द्विशफेतराः ॥२८॥सुता दनोरेकषष्टिस्तेषां प्राधानिकाञ्छृणु ॥ द्विमूर्धा [illegible]रिष्टो हयग्रीवो विभावसुः ॥२९॥ अयोमुखः शंकुशिराःस्वर्भानुः कपिलोऽरुणः॥पुलोमा वृषपर्वा च एकचक्र[illegible]पनः॥ ॥ ३० ॥धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः ॥स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ॥३१॥ वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली॥वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः॥उपदानवी हयशिरा पुलोमा कालकातथा॥३२॥

द्विमूर्धा१ शंवरः२ अरिष्टः ३ हयग्रीवः ४ विभावसुः ५ ॥२९॥अयोमुखः ६ शंकुशिराः ७ स्वर्भानुः ८ कपिलः ९अरुणः १०पुलोमा ११ वृषपर्वा १२एकचक्रः १३ अनुतापनः १४॥ ३० ॥धूम्रकेशः १५ विरूपाक्षः १६ विप्रचित्तिः १७ दुर्जयः १८ इति । स्वर्भानोः सुप्रभां कन्यां नमुचिरुवाह वृषपर्वणः शर्मिष्ठां ययातिः ॥ ३१ ॥दनोः पुत्रो वैश्वानरः तस्य कन्या उपदानवी १ हयशिरा २ पुलोमा३ कालका ४ ॥ ३२॥

१ कृष्णपक्षे खण्डिकाः ।

हिरण्याक्षः उपदानवीं क्रतुर्हयशिरां ब्रह्मप्रेरितः कश्यपः पुलोमां कालकां चोवाह ॥ ३३ ॥ ताभ्यां षष्टिसहस्राणि युद्धशालिनो दानवाः आसन् । अर्जुनः स्वर्गगतः सन् तान् जघान ॥ ३४ ॥ विप्रचित्तिः सिंहिकायां राहुज्येष्ठं केतुशतं यो ग्रहत्वं प्राप ॥३५॥ अथाऽदितेर्वंशं शृणु । यत्र नारायणोंशेनाऽवातरत् ॥३६॥ अदितेः पुत्रा द्वादश । विवस्वान् १ अर्यमा २ पूषा ३ त्वष्टा ४ सविता ५ भगः६ धाता ७ विधाता ८ वरुणः९ मित्रः१० शक्रः ११ उरुक्रमः १२ ॥३७॥ तत्र विवस्वतः पत्नी संज्ञा श्राद्धदेवं मनुं यमं यमुनांच सुषुवे । सा तुरगी भूत्वाऽश्विनीकुमारौ सुषुवे ॥ ३८ ॥

उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप॥पुलोमां कालकां च द्वे वैश्वानरसुते तु कः॥ उपयमेऽथ भगवान् कश्यपो ब्रह्मचोदितः॥ ३३ ॥पौलोमाः कालकेयाश्च दानवा युद्धशालिनः ॥ तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ॥ जघान स्वर्गतो राजन्नेक इंद्रप्रियंकरः॥३४॥ विप्रचित्तः सिंहिकायां शतं चैकमजीजनत् ॥ राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः ॥ ३५ ॥ अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः॥यत्र नारायणो देवः स्वांशेनावतरद् [illegible] ॥३६॥ विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ॥ धाता विधाता वरुणो मित्रः शक्र उरुक्रमः॥३७॥ विवस्वत[illegible]द्धदेवं संज्ञासूयत वै मनुम् ॥ मिथुनं च महाभागा यमं देवं यमीं तथा ॥स वै भूत्वाऽथ वडवा नासत्यौ सुषुवे [illegible] ॥ ३८ ॥ छाया शनैश्चरं लेभे सावर्णिं च मनुं ततः॥ कन्यां च तपतीं या वै वव्रे संवरणं पतिम् ॥३९॥अर्य्यम्णो मातृकापत्नी तयोश्चर्षणयः सुताः ॥ यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥४०॥ पूषाऽनपत्यः पिष्टादो भग्नदंतोऽभवत् पुरा ॥ योसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४१ ॥ त्वष्टुर्दैत्यानुजा भार्या रचना नाम कन्यका ॥सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४२ [illegible] वव्रिरे सुरगणा दौहित्रं द्विषतामपि ॥ विमतेन परित्यक्ता गुरुणांगिरसेन [illegible]त॥४३॥

इति श्री भागव० म० षष्ठ० दक्षकन्यावंशवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

पुनः सैव छाया शनैश्चरं सावर्णिं मनुं तपतीं कन्यां च सुषुवे या संवरणं वव्रे ॥ ३९ ॥ अर्य्यम्णो मातृकायां मनुष्याः आसन् ॥४० ॥ पूषा पिष्टभुगनपत्यः ॥ ४१ त्वष्टुः रचनायां संनिवेशो विश्वरूपश्च जज्ञे ॥ ४२ ॥ बृहस्पतिना त्यक्ताः द्विषतां देवाः दौहित्रमपि विश्वरूपं पौरोहित्याय वव्रिरे ॥ ४३ ॥ इति श्रीभागवते चू०षष्ठ०षष्ठोऽध्यायः ॥ ६ ॥

सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतः सुरैः । गुरुणा संपरित्यक्तैः पौरोहित्यमथाकरोत् ॥ १ ॥ राजोवाच ॥ हे ब्रह्मन् !बृहस्पतिःकस्माद् देवान् त्यक्तवान् एतद् वद ॥ १ ॥ श्रीशुक उवाच॥इंद्रस्त्रिभुवनैश्वर्यमदेन मत्तो मरुद्भिःसिद्धचारणगंधर्वैर्विद्याधराप्सरोभिः संवेष्टितः ॥ २ ॥ ३ ॥४॥ सिंहासने स्थितः ॥ ५ ॥ छत्रचामरैर्युतः इंद्राण्या विराजमानः सन् ॥ ६ ॥ ७॥ सभागतं बृहस्पतिं पश्यन्नपि नोत्थानेनाऽभ्यनंदत् ॥ ८ ॥

राजोवाच ॥ कस्य हेतोःपरित्यक्ता आचार्येणात्मनः सुराः ॥ एतदाचक्ष्व भगवञ्छिष्याणामक्रमं गुरौ ॥ १ ॥ श्रीशुक उवाच ॥इंद्रस्त्रिभुवनैश्वर्यमदोल्लंघितसत्पथः ॥ मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋभुभिर्नृप ॥ २॥ विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः ॥ सिद्धचारणगंधर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥ विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ॥ निषेव्यमाणो मघवान् स्तूयमानश्च भारत ॥ ४ ॥ उपगीयमानो ललितमास्थानाध्यासनाश्रितः ॥ पांडुरेणातपत्रेण चंद्रमंडलचारुणा ॥ ५॥ युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः ॥ विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥ स यदा परमाचार्यं देवानामात्मनश्च ह ॥ नाभ्यनंदत संप्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥ वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ॥ नोच्चचालासनादिन्द्रः पश्यन्नपि सभागतम् ॥ ८ ॥ ततो निर्गत्य सहसा कविरांगिरसः प्रभुः ॥ आययौ स्वगृहं तूष्णीं विद्वाञ्छ्रीमदविक्रियाम् ॥ ९ ॥ तर्ह्येव प्रतिबुध्येंद्रो गुरुहेलनमात्मनः ॥ गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥ अहो बत मयाऽसाधु कृतं वै दभ्रबुद्धिना ॥ यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११ ॥ को गृध्येत् पंडितो लक्ष्मीं त्रिविष्टपपतेरपि ॥ ययाऽहमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥ १२ ॥ ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कंचन ॥प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३ ॥

तदा गुरुर्मदेन व्याप्तमिंद्रं दृष्ट्वा गृहमाययौ ॥९॥ ततः इंद्रो गुरोरपमानं ज्ञात्वा सदसि स्वं निंदयन्नाय ॥१०॥अहो ऐश्वर्यमत्तेन मया सदसि गुरुस्तिरस्कृतः ॥ ११ ॥ धिङ् मां ममैश्वर्यं च योऽहमासुरं भावं श्रितः । राज्ञाऽऽसनात् नोत्थातव्यमिति ये वदंति ते धर्मं न विदुः ॥ १२ ॥१३॥

ये कुपथदेष्टॄणां वचने श्रद्दध्युः तेऽधः पतंति ॥ १४ ॥ अतो गुरुं प्रसादयिष्ये ॥ १५ ॥ एवं चिंतयतः सतो बृहस्पतिरात्ममाययांऽतर्धानं गतः ॥ १६ ॥ इंद्रो देवैः सह गुरुमप्राप्य शर्म न लेभे ॥ १७ ॥ तत् श्रुत्वा सर्वे दैत्याः शुक्रमाश्रित्य देवान् प्रति योद्धुमुद्योगं चक्रुः ॥ १८ ॥ तदा तेषां बाणैर्भिन्नांगाः सेंद्राः देवाः ब्रह्माणं जग्मुः ॥ १९ ॥ ब्रह्मा तान् दुःखितान् दृष्ट्वा जगाद ॥ २० ॥ अहो देवाः ! भवद्भिरैश्वर्याद् गुरुस्तिरस्कृतः । अतो महद

तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः ॥ ये श्रद्दध्युर्वचस्ते वै मज्जंत्यश्मप्लवा इव ॥ १४ ॥ अथाऽहममराचार्यमगाधधिषणं द्विजम् ॥ प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् ॥ १५ ॥ एवं चिंतयतस्तस्य मघोनो भगवान् गृहात् ॥ बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥ गुरोर्नाधिगतःसंज्ञां परीक्षन् भगवान् स्वराट् ॥ ध्यायन् धिया सुरै र्युक्तः शर्म नालभतात्मनः ॥ १७ ॥ तच्छ्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतम् ॥ देवान् प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥ १८ ॥ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नांगोरुबाहवः ॥ ब्राह्मणं शरणं जग्मुः सहेंद्रा नतकंधराः ॥ १९ ॥ तांस्तथा भ्यर्दितान् वीक्ष्य भगवानात्मभूरजः ॥ कृपया परया देव उवाच परिसांत्वयन् ॥ २० ॥ ब्रह्मोवाच ॥ अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत् ॥ ब्रह्मिष्ठं ब्राह्मणं दांतमैश्वर्यान्नाभ्यनंदत ॥ २१ ॥ तस्यायमनयस्यासीत् परेभ्यो वः पराभवः ॥ प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च यत् सुराः ॥ २२ ॥ मघवन् द्विषतः पश्य प्रक्षीणान् गुर्वतिक्रमात् ॥ संप्रत्युपचितान् भूयःकाव्यमाराध्य भक्तितः ॥ आददीरन् निलयनं ममापि भृगुदेवताः ॥ २३ ॥ त्रिविष्टपं किं गणयंत्यभेद्यमंत्रा भृगूणामनुशिक्षितार्थाः ॥ न विप्रगोविंदगवीश्वराणां भवंत्यभद्राणि नरेश्वराणाम् ॥ २४ ॥ तद् विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवंतम् ॥ सभाजितोऽर्थान् स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म ॥ २५ ॥

भद्रं कृतम् ॥ २१ ॥ यतः शत्रुभ्यो वः पराभवः आसीत् ॥ २२ ॥ हे मघवन् ! गुर्वतिक्रमं पश्य । तव शत्रवो भक्त्या शुक्रमाराध्य ॥ २३ ॥ स्वर्गमपि ग्रहीष्यंति ॥ २४ ॥ तस्मादाशु विश्वरूपं भजत । स भवदर्थान् विधास्यते ॥ २५ ॥

१ विप्रादयः ईश्वराः अनुग्राहकाः येषां तेषाम् । २ असुरपक्षपातम् ।

श्रीशुक उवाच ॥ एवं ब्रह्मवचः श्रुत्वा विश्वरूपं गत्वा ॥२६॥ देवा ऊचुः॥ हे तात ! वयमतिथयः प्राप्ताः । अस्माकं कामः संपाद्यताम् ॥२७॥ पुत्राणां पितृशुश्रूषणं परो धर्मः॥२८॥ यतो गुरुर्वेदस्य मूर्तिः पिता ब्रह्मणो मूर्तिः भ्रातद्रस्य मूर्तिः । माता क्षितेर्मूर्तिः॥२९॥ भगिनी दयायाः मूर्तिः । अतिथिर्धर्मस्य मूर्तिः । सर्वभूतानि श्रीविष्णोर्मूर्तिः ॥३०॥ अतो नः पितॄणां दुःखं तपसा नाशयन् सन्नाज्ञां कर्तुमर्हसि ॥ ३१॥ त्वामु

श्रीशुक उवाच ॥ त एवमुदिता राजन् ब्रह्मणा विगतज्वराः॥ ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २६ ॥ देवा ऊचुः ॥ वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ॥ कामः संपाद्यतां तात पितणां समयोचितः ॥ २७ ॥ पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ॥ अपि पुत्रवतां ब्रह्मन् किमुत ब्रह्मचारिणाम् ॥ २८ ॥ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ॥ भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात् क्षितेस्तनुः ॥ २९॥ दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्व यम् ॥ अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३०॥ तस्मात् पितॄणामार्तानामार्तिं परपराभवम् ॥ तपसाऽपन यंस्तात संदेशं कर्तुमर्हसि ॥ ३१ ॥ वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ॥ यथांजसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३२ ॥ न गर्हयंति ह्यर्थेषु यविष्ठांघ्र्यभिवादनम् ॥ छंदोभ्योऽन्यत्र न ब्रह्मन् वयोज्येष्ठ्यस्य कारणम् ॥३३॥ ऋषिरुवाच ॥ अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ॥ स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥३४॥विश्व रूप उवाच ॥ १विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययम् ॥ कथं नु मद्विधो नाथा लोकेशैरभियाचितम् ॥ प्रत्याख्यास्य ति तच्छिष्यः स एव स्वार्थ उच्यते ॥ ३५ ॥ अकिंचनानां हि धनं शिलोंछनं तेनेह निर्वर्तितसाधुसत्क्रियः ॥ कथं विगर्ह्य नु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ॥ ३६ ॥

पाध्यायं वृणीमहे तव तेजसा शत्रून् जेष्यामः ॥ ३२ ॥ कार्येषु कनिष्ठवंदनं न निन्दंति मंत्रेभ्योऽन्यत्र वयोज्यैष्ठ्यस्य कारणं न तु मंत्रेषु अतो मंत्रदानेन त्वमेव ज्येष्ठो भविष्यसि ॥ ३३ ॥ एवं देवैः पौरोहित्ये प्रार्थितो विश्वरूपस्तानाह ॥ ३४ ॥ विश्वरूप उवाच ॥ हे देवाः ! स्वपुण्य नाशकं पौरोहित्यं युष्मत्प्रार्थनया करिष्यामि ॥ ३५ ॥ दुर्मतिर्धनेच्छया तत कर्तुं हृष्यति । संतुष्टो निर्धनोपि धर्ममाचरति ॥ ३६ ॥

१ पूर्वसंचितब्रह्मवर्चसो व्ययकरम् ।

तथापि भवतां प्रार्थितं प्राणैरर्थैश्च साधये ॥३७॥ श्रीशुक उवाच ॥ विश्वरूपः एवं प्रतिज्ञाय पौरोहित्यं चक्रे ॥३८ ॥ शुक्रविद्यया रक्षितां दैत्यश्रियं वैष्णव्या विद्ययाऽऽकृष्येन्द्राय ददौ॥३९॥इंद्रो यया रक्षितः सन् दैत्यसेनाः जिग्ये विश्वरूपस्तामिंद्रायाऽऽह ॥४०॥इति श्रीभागवते चू० षष्ठस्कंध सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे विश्वरूपस्तु वर्म नारायणात्मकम् । इंद्राय प्राह येनेंद्रो गुप्तो दैत्यानथाजयत् ॥ १ ॥ राजोवाच ।इंद्रो

तथापि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ॥ भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३७ ॥ श्रीशुक उवाच ॥ तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ॥पौरोहित्यं वृतश्चक्रे परमेण समाधिना ॥ ३८॥ सुरद्विषां श्रियं गुप्तामौशनस्यापि विद्यया ॥ आच्छिद्याऽदान्महेंद्राय वैष्णव्या विद्यया विभुः ॥ ३९ ॥ यया गुप्तः सहस्राक्षो जिग्ये सुरचमूर्विभुः ॥ तां प्राह स महेंद्राय विश्वरूप उदारधीः॥४० ॥ इति श्रीभागवते महापुराणे षष्ठस्कंध पौरोहित्यायेन्द्रादिकृतं विश्वरूपवरणनं नाम सप्तमोऽध्यायः॥७॥राजोवाच॥ यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ॥ क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ॥ यथाततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुक उवाच ॥ वृतः पुरोहितस्त्वाष्ट्रो महेंद्रायानुपृच्छते ॥ नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच ॥ धौतांघ्रिपाणिराचम्य सपवित्र उदङ्मुखः ॥ कृतस्वांगकरन्यासो मंत्राभ्यां वाग्यतः शुचिः ॥ ४॥ नारायणमयं वर्म सन्नह्येद् भय आगते ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ ५ ॥ मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् ॥ ॐ नमोनारायणायेति विपर्ययमथापि वा ॥ ६ ॥

यया शत्रून् निर्जित्य त्रैलोक्यलक्ष्मीं बुभुजे ॥ १ ॥ हे शुक ! तद् नारायणकवचं मे आख्याहि ॥ २ ॥ श्रीशुक उवाच ॥ विश्वरूपःइंद्राय यत् कवचं जगाद तत् शृणु॥३॥ विश्वरूप उवाच ॥ हस्तपादं प्रक्षाल्याचम्योदङ्मुखो वाग्यतोऽष्टाक्षरद्वादशाक्षरमंत्राभ्यामंगन्यासं करन्यासं च कृत्वा ॥ ४ ॥ कवचं धारयेत् ॐनमो नारायणायेति पादाद्यष्टांगेषु क्रमेण न्यसेत् ॥ ५ ॥ ६ ॥



१ विपर्ययं यथा भवत्येवं शिर आदि पादान्तं वा न्यसेत् । उत्पात्तिन्यासं संहारन्यासं वा कुर्यादित्यर्थः ।

ॐ नमो भगवते वासुदेवायेत्येवमंगुष्ठपर्वसु करन्यासं कुर्यात् ॥ ७॥ ॐ विष्णवे नम इति हृदयादिषु विन्यसेत्॥८॥९॥ततः ईश्वरं ध्यात्वा कवचं जपेत् ॥ १० ॥ भगवान् गरुडारूढोऽष्टबाहुः सर्वरक्षां करोतु ॥ ११ ॥ मत्स्यमूर्तिर्जलेषु मां रक्षतु । वामनः स्थलेषु । त्रिविक्रमः खे ॥ १२ ॥ नृसिंहः संकटादिस्थाने । वराहो मार्गे ॥ १३ ॥ परशुरामो गिरिशिखरे । रामचन्द्रः प्रवासे ॥ १४ ॥ नारायणो जारणादिप्रयोगात् । नरो गर्वात्

करन्यासं ततः कुर्याद् द्वादशाक्षरविद्यया ॥ प्रणवादियकारांतमंगुल्यंगुष्ठपर्वसु ॥ ७ ॥ न्यसेद् हृदयमोंकारं विकारमनु मूर्धनि ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखयादिशेत् ॥ वेकारं नेत्रयोर्युंज्यान्नकारं सर्वसंधिषु ॥ ८ ॥ मकारमस्त्रमुद्दिश्य मंत्रमूर्तिर्भवेद् बुधः ॥ सविसर्गं फडंतं तत् सर्वदिक्षु विनिर्दिशेत् ॥ ॐ विष्णवे नमः फट् इति ॥९॥ आत्मानं परमं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ॥ विद्यातेजस्तपोमूर्तिमिमं मंत्रमुदाहरेत् ॥१० ॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेंद्रपृष्ठे ॥ दरारिचर्मासिगदेषुचापपाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥ ११ ॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥ स्थलेषु मायाबटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १२ ॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ॥ विमुंचतो यस्य महाट्टहासं दिशो विनेदुन्यपतंश्च गर्भाः ॥ १३ ॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ॥ रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद् भरताग्रजोऽस्मान् ॥ १४ ॥ मामुग्रधर्मादखिलात् प्रमादान्नारायणः पातु नरश्च हासात् ॥ दत्तस्त्वयोगादथ योगनाथः पायाद् गणेशः कपिलः कर्मबंधात् ॥ १५ ॥ सनत्कुमारोऽवतु कामदेवाद् हयशीर्षा मां पथि देवहेलनात् ॥ देवर्षिवर्यः पुरुषार्चनांतरात् कूर्मो हरिर्मां निरयादशेषात् ॥ १६ ॥ धन्वंतरिर्भगवान् पात्वपथ्याद् द्वंद्वाद् भयादृषभो निर्जितात्मा ॥ यज्ञश्च लोकादवताज्जनांताद् बलो गणात् क्रोधवशादहींद्रः ॥ १७ ॥

दत्तो योगभ्रंशात् । कपिलः कर्मबंधात् ॥ १५ ॥ सनत्कुमारो मदनात् । हयशीर्षा मार्गे देवापमानात् । कूर्मो निरयात् ॥ १६ ॥ धन्वंतरिः कुभोजनात् । ऋषभो द्वंद्वभयात् । यज्ञो जनापवादात् । बलभद्रः कालात् । शेषः सर्पगणात् ॥ १७ ॥

व्यासोऽज्ञानात् । बुद्धः पाखंडगणात् । कल्किः कलिकालमलात् ॥ १८ ॥ केशवो गदया प्रातः । गोविंदः सार्धयामे । विष्णुर्मध्यंदिने ॥ १९॥ मधुहाऽपराह्ने । माधवः सायम् । हृषीकेशः प्रदोषे । पद्मनाभोऽर्धरात्रे ॥२०॥ ईशोपररात्रे। जनार्दनः उषःकाले । दामोदरोऽनुसंध्यम्। विश्वेश्वरः प्रभाते ॥२१॥ हे चक्र ! मम रिपुसैन्यं दंदग्धिदंदग्धि ॥ २२ ॥ हे गदे ! यक्षभूतपिशाचाद्यरीन् चूर्णयचूर्णय ॥ २३ ॥ हे शंख ! ब्रह्मराक्षसा

द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु पाखंडगणात् प्रमादात ॥ कल्किः कलेः कालमलात् प्रपातु धर्मावनायोरुकृताव तारः ॥१८॥ मां केशवो गदया प्रातरव्यात् गोविंद आसंगवमात्तवेणुः ॥ नारायणः प्राह्ण उदारशक्तिर्मध्यंदिने विष्णु रिंद्रपाणिः ॥ १९ ॥ देवोऽपराह्ने मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ॥ दोषे हृषीकेश उतार्धरात्रे निशी थ एकोऽवतु पद्मनाभः ॥ २० ॥ श्रीवत्सधामा पररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ॥ दामोदरोऽव्यादनुसंध्यं प्रभाते विश्वेश्वरो भगवान् कालमूर्तिः ॥ २१ ॥ चक्रं युगांतानलतिग्मनेमि भ्रमत् समंताद् भगवत्प्रयुक्तम् ॥ दंदग्धि दंदग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥२२॥ गदेऽशनिस्पर्शनविस्फुलिंगे निष्पिण्ढि निष्पिढ्यजितप्रियासि ॥ कूष्मांडवैनायकयक्षरक्षोभूतग्रहांश्चूर्णयचूर्णयारीन् ॥ २३ ॥ त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ॥ दरेंद्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कंपयन् ॥२४॥ त्वं तिग्मधाराऽसि वरारिसैन्यमीशप्रयुक्तो मम छिन्धि छिंधि ॥ चक्षूंषि चर्मञ्छतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥ २५ ॥ यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ॥ सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥२६ ॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ॥ प्रयांतु संक्षयं सद्यो ये नः श्रेयः प्रतीपकाः ॥ २७ ॥

दीन् विद्रावयविद्रावय ॥ २४ ॥ हे खड्ग ! ममाऽरिसैन्यं तिग्मधारया छिंधिछिंधि । हे चर्मन् ! द्विषां चक्षूंषि छादय हर ॥ २५ ॥ ग्रहेभ्यः सर्वेभ्यो व्याघ्रादिभ्यश्च यद् भय तत् ॥ २६ ॥ भगवन्नामकीर्तनात् सद्यः क्षयं यातु ॥ २७ ॥

१ संगवमभिव्याप्य । २ शुष्कतृणम् । ३ अघवताम् । ४ इष्टव्याघातकाः ।

गरुडः सर्वदुःखेभ्यो रक्षतु ॥ २८ ॥ सर्वापद्भ्यो हरेर्नाम । पार्षदाः बुद्धींद्रियमनःप्राणान् ॥ २९ ॥ सर्वे उपद्रवाःनामस्मरणेन नाशं यांतु॥३०॥ हरिर्माययाऽऽयुधदेहाख्याः धत्ते॥ ३१ ॥ सर्वरूपैर्हरिः सदा पातु ॥३२॥ विदिक्षु दिक्षु सर्वत्र नारसिंहः पातु॥ ३३॥ हे इन्द्र! नारायणाख्यं वर्म ते आख्यातं येन शत्रून् जेष्यसि ॥३४॥एतद् धारयमाणो यंयं चक्षुषा पश्यति स सद्यो मुच्यते॥३५॥विद्यांधारयतः कुतश्च भयं न भवेत्॥३६॥

गरुडो भगवान्स्तोत्रस्तोमश्छंदोमयः प्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ २८ ॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ॥ बुद्धींद्रियमनःप्राणान्पांतु पार्षदभूषणाः ॥ २९ ॥ यथाहि भगवानेव वस्तुतः सदसच्च यत्[1] ॥ सत्येनानेन नः सर्वे यांतु नाशमुपद्रवाः ॥ ३० ॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम्॥ भूषणायुधलिंगाख्या धत्ते शक्तीःस्वमायया ॥३१॥तेनैव सत्यमानेन सर्वज्ञो भगवान्हरिः ॥ पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३२ ॥ विदिक्षु दिक्षूर्ध्वमधः समंतादंतर्बहिर्भगवान्नारसिंहः ॥ प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३३॥ भगवन्निदमाख्यातं वर्म नारायणात्मकम् ॥ विजेष्यस्यंजसा येन दंशितोऽसुरयूथपान् ॥ ३४ ॥ एतद्धारयमाणस्तु यंयं पश्यति चक्षुषा ॥पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥ ३५ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ॥ राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥ ३६ ॥ इमां विद्यांपुरा कश्चित्कौशिको धारयन्द्विजः ॥ योगधारणया स्वांगं जहौ स मरुधन्वनि॥३७ ॥ तस्योपरि विमानेन गंधर्वपतिरेकदा ॥ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः॥ ३८ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्छिराः॥ स वालखिल्यवचनादस्थीन्यादाय विस्मितः॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥३९ ॥

पुरा कश्चित् कौशिको द्विजः इमां विद्यां धारयन् मरुदेशे स्वांगं जहौ ॥ ३७ एकदा तस्योपरि चित्ररथो गंधर्वो विमानेन ययौ ॥ ३८॥ स सद्यः सविमानो गगनाद् न्यपतत । पुनर्वालखिल्यवचनादस्थीन्यादाय सरस्वत्यां प्रक्षिप्य स्नात्वा स्वधाम ययौ ॥ ३९ ॥

१ मूर्तामूर्तं च यत्तत्सर्वं जगत् । २ मदरहितः ।

श्रीशुक उवाच ॥ यः इदं शृणुयाद् धारयति च स सर्वतो भयात् मुच्यते॥४०॥इन्द्रो विश्वरूपाद् विद्यामेतां प्राप्य मृधेऽसुरान् जित्वा त्रैलोक्य लक्ष्मीं बुभुजे ॥४१॥ इति श्रीभागवते षष्ठ० चू० अष्टमोऽध्यायः ॥८॥ नवमे विश्वरूपे तु हते शक्रेण कोपतः ॥ त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवैर्हरेः स्तुतिः ॥१॥ श्रीशुक उवाच ॥ विश्वरूपस्य सोमपीथं सुरापीथमन्नादमिति त्रीणि शिरांसि ॥१॥ स एकदा यज्ञे देवेभ्यः प्रत्यक्षं हविर्भाग

श्रीशुक उवाच ॥ य इदं शृणुयात्काले यो धारयति चादृतः ॥ तं नमस्यंति भूतानि मुच्यते सर्वतो भयात् ॥ ४० ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४१ ॥ इति श्रीभागवते महा० षष्ठ० नारायणवर्मकथनं नामाष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ तस्यासन्विश्वरूपस्य शिरांसि त्रीणि भारत ॥ सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥ १ ॥ स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः॥ अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ॥२॥ स एव हि ददौ भागं परोक्षमसुरान्प्रति ॥ यजमानोऽवहद्भागं मातृस्नेहवशानुगः ॥३॥ तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः ॥ आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा ॥ ४ ॥ सोमपीथं तु यत्तस्य शिर आसीत्कपिंजलः ॥ कलविंकः सुरापीथमन्नादं यत्स तित्तिरिः ॥ ५ ॥ ब्रह्महत्यामंजलिना जग्राह यदपीश्वरः ॥ संवत्सरांते तदघं भूतानां स विशुद्धये ॥ भूम्यंबुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥६ ॥ भूमिस्तुरीयं जग्राह खातपूरवरेण वै ॥ ईरिणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते ॥ ७ ॥ तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः ॥ तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥ ८ ॥

ददौ ॥ २ ॥ मातृस्नेहेन दैत्येभ्यो गुप्तं भागं ददौ ॥३॥ इंद्रः एवं तस्य कापटचं ज्ञात्वा खङ्गेन शीर्षाणि चिच्छेद ॥४॥ तत्र सोमपीथात् कपिंजलपक्षी सुरापीथात् कलविंकः अन्नादात् तित्तिरिः ॥५ ॥ इन्द्रस्तद्वधेन ब्रह्महत्यामंजलिना जग्राह । संवत्सरांते आत्मशुद्धये ब्रह्महत्यां चतुर्धा विभज्य भूम्यंबुद्रुमयोषिद्भ्यो ददौ ॥ ६ ॥ तत्र भूमिः खातपूरवरेण ॥ ७ ॥ द्रुमाः अग्रच्छेदेन पुनः प्ररोहं गमिष्यथेति वरेण ॥ ८ ॥



१ खातस्य पूरणरूपेण वरेण । यदि खातपूरणं स्वत एव भविष्यति तर्हि ग्रहीष्यामीति भाषाबंधेन २ ईरणमूषरम् ।

स्त्रियः सगर्भत्वेऽपि संभोगक्षमत्ववरेण ॥ ९ ॥ आपः क्षीरादिमिश्रत्वेनाधिकं स्यादिति वरेण फेनरूपमलं जगृहुः ॥ १० ॥ ततस्त्वष्टा पुत्रनाशं श्रुत्वेंद्रशत्रो विवर्धस्वेति मंत्रेण होमं चकार ॥ ११ ॥ अत्र दक्षिणाग्नेः कृतांत इव घोरदर्शनः पुरुषः उत्थितः॥१२॥तं प्रतिदिनं वर्धमानं भयकरं दग्धशैलसदृशम् ॥ १३ ॥ तप्तताम्रशिखाश्मश्रुम् ॥ १४ ॥ शूलं गृहीत्वा पदा महीं कंपयंतम् ॥ १५ ॥ जिह्वया ऋक्षाणि लिहंतं भुवनत्रयं ग्र

शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ॥ रजोरूपेण तास्वंहो मासिमासि प्रदृश्यते ॥ ९ ॥ द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् ॥ तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् ॥१० ॥ हतपुत्रस्ततस्त्वष्टा जुहावेंद्राय शत्रवे ॥ इंद्रशत्रो विवर्धस्व माचिरं जहि विद्विषम् ॥ ११ ॥ अथान्वाहार्यपचनादुत्थितो घोरदर्शनः ॥ कृतांत इव लोकानां युगांतसमये यथा ॥ १२ ॥ विष्वग्विवर्धमानं तमिषुमात्रं दिनेदिने ॥ दग्धशैलप्रतीकाशं संध्याऽभ्रानीकवर्चसम् ॥ १३ ॥ तप्तताम्रशिखाश्मश्रुं मध्याह्नाऽर्कोग्रलोचनम् ॥१४॥ देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी॥ नृत्यंतमुन्नदंतं च चालयंतं पदा महीम् ॥ १५ ॥ दरीगंभीरवक्त्रेण पिबता च नभस्तलम् ॥ लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् ॥१६॥ महता रौद्रदंष्ट्रेण जृंभमाणं मुहुर्मुहुः ॥ वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥ १७ ॥ येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना ॥ स वै वृत्र इति प्रोक्तः पापः परमदारुणः॥ १८ ॥ तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः ॥ स्वैस्स्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः॥१९ ॥ ततस्ते विस्मिताः सव विषण्णा ग्रस्ततेजसः॥प्रत्यंचमादिपुरुषमुपतस्थुः समाहिताः ॥ २० ॥ देवा ऊचुः ॥ वाय्वंबराऽग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजंतः॥हराम यस्मै बलिमंतकोऽसौ बिभेति यस्मादरणं ततो नः ॥ २१ ॥

सता मुखेन जृंभमाणं दृष्ट्वा त्रस्ताः सतो लोकाः दुद्रुवुः ॥ १६ ॥ १७॥ येनेमे लोकाः व्याप्ताः स वृत्रः इति प्रोक्तः ॥ १८ ॥ इंद्राद्या देवाः स्वैः शस्त्रास्त्रैर्निजघ्नुः । वृत्रस्तानि शस्त्रास्त्राणि जग्राह ॥ १९ ॥ तदा देवाः खिन्नाः सतो हरिं तुष्टुवुः ॥ २० ॥ देवा ऊचुः ॥ हे भगवन् । वयं ब्रह्मादयो यस्मै बलिं हराम यस्मात् कालोपि बिभेति सोऽस्माकं रक्षकोऽस्तु ॥ २१ ॥

---

१ यावत्प्रसवं गर्भानुपघातं संभोगवरेण । २ यस्मिन्द्रव्ये क्षरिादावापो मिश्राः भवेयुस्तस्याधिक्यं स्यादिति वरेण ।३ अंतर्यामिणम् ।

यः ईश्वरं विनाऽन्यं शरणं गच्छति सोऽज्ञः यथा शुनः पुच्छेन समुद्रं तर्तुमिच्छति ॥२२ ॥ यो मत्स्यरूपी भूत्वा सत्यव्रतं ररक्ष सोऽस्मान् रक्षिष्यति ॥२३ ॥ यः पुरा प्रलयोदके ब्रह्माणं ततार सोऽद्य नस्तारकोऽस्तु ॥ २४ ॥ यः ईशः स्वमायया नः ससर्ज ॥ २५ ॥यः शत्रुभिरर्द्यमानान् नो नानावतारेण युगेयुगे पाति ॥ २६ ॥ तमात्मदैवतं शरणं व्रजेम । स ईश्वरो नः शं विधास्यति ॥ २७ ॥ शुक उवाच । हे नृप ! तेषां वचः

अविस्मितं तं परिपूर्णकामं स्वेनैवलाभेन समं प्रशांतम्॥विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातितितर्ति सिंधुम् ॥२२॥यस्योरुशृंगे जगतीं स्वनावं मनुर्यथाऽऽबध्य ततार दुर्गम् ॥ स एव नस्त्वाष्ट्रभयाद्दुरंतात्त्राताश्रितान्वारिचरोऽपि नूनम्॥२३॥पुरा स्वयंभूरपि संयमांभस्युदीर्णवातोर्मिरवैः कराले॥ एकोऽरविंदात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः ॥ २४ ॥ य एक ईशो निजमायया नः ससर्ज येनाऽनुसृजाम विश्वम् ॥ वयं न यस्यापि पुरः समीहतः पश्याम लिंगं पृथगीशमानिनः ॥२५॥ यो नः सपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृषु नित्य एव॥ कृतावतारस्तनुभिः स्वमायया कृत्वात्मसात्पाति युगेयुगे च । २६ ॥ तमेव देवं वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमन्यम्॥व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा ॥२७ ॥श्रीशुक उवाच॥ इति तेषां महाराज सुराणामुपतिष्ठताम्॥ प्रतीच्यां दिश्यभूदाविः शंखचक्रगदाधरः ॥२८॥ आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ॥ पर्युपासितमुन्निद्र शरदंबुरुहेक्षणम् ॥ २९ ॥ दृष्ट्वा तमवनौ सर्व ईक्षणाह्लादविक्लवाः ॥ दंडवत्पतिता राजञ्छनैरुत्थाय तुष्टुवुः ॥ ३० ॥ देवा ऊचुः ॥ नमस्ते यज्ञवीर्याय वयसे उत ते नमः ॥ नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये ॥ ३१ ॥

आकर्ण्य शंखचक्रगदाधरो हरिः प्रादुर्भूतः ॥ २८ ॥ तदा देवाः षोडशपार्षदैः सेवितं तं दृष्ट्वा भुवि दंडवत् पतिताः संतः शनैः समुत्थाय तुष्टुवुः ॥ २९ ॥ ३० ॥ देवा ऊचुः ॥ स्वर्गादिफलजननाय सामर्थ्यं यस्य तस्मै नमः ॥ ३१ ॥

१ पृथ्वीरूपाम् । २ पूर्वमेवांतर्यामितया । ३ पृथक् पृथगीशाः इत्याभिमानिनः । ४ सुनन्द दिभिः । ५ तत्फलपरिच्छेदककालात्मने । ६ दैत्येष्वस्तं चक्रं येन तस्मै । ७ शोभनबहुनाम्ने ।

हे धातः ! तव निर्गुणस्वरूपमर्वाचीनः को वेदितुमर्हति । अतः केशव ! ते नमोऽस्तु ॥ ३२ ॥ हे भगवन् ! नारायण सर्वेश्वर लक्ष्मीनाथ ते नमोऽस्तु ॥ ३३ ॥ हे भगवन् ! तवायं क्रीडायोगो दुर्ज्ञेयः यतस्त्वं निर्गुणोऽपि विश्वं मायया सृजसि पासि हरसि ॥ ३४ ॥ अथ भवान् देवदत्तवत्

यत्ते गतीनां त्रिसृणामीशितुः परमं पदम् ॥ नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति ॥ ३२ ॥ ॐ नमस्तेऽस्तु भगवन्नारायण वासुदेवादिपुरुष महापुरुष महानुभाव परममंगल परमकल्याण परमकारुणिक केवलजगदाधारलोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगेन समाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान् ॥ ३३ ॥ दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि ॥ ३४ ॥ अथ तत्र भवान्किं देवदत्तवदिह गुणविसर्गपतितः पारतंत्र्येण स्वकृतकुशलाकुशलं फलमुपाददाति आहो स्विदात्माराम उपशमशीलः समंजसदर्शन उदास्त इति ह वाव न विदाम ॥ ३५ ॥ न हि विरोध उभयं भगवत्यपरिगणितगुणगणईश्वरेऽनवगाह्यमाहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलांतःकरणाश्रयदुरवग्रहवादिनां विवादानवसर उपरतसमस्तमायामये केवल एवात्ममायामंतर्धाय को नु अर्थो दुर्घट इव भवति स्वरूपद्वयाभावात् ॥ ३६ ॥

पारतंत्र्येण शुभाशुभयोः फलं स्वीकरोति किं वाऽऽत्मारामः सन् केवलं साक्षितया वर्तते तत् वयं न विद्मः ॥ ३५ ॥ हे हरे ! अपरिगणितगुणगणे भगवति त्वयि कोऽर्थो दुर्घट इव भवति । न कोऽपि ॥ ३६ ॥

---

१ त्रिगुणात्मिकानां ;परमं निर्गुणस्वरूपम् । २ परिभावितः सुशीलितः परिस्फुटः पारमहंस्यधर्मो भगवद्भजनं तेनोद्घाटितं तमोरूपं कपाटं यस्मिन् तस्मिन्द्वारभूते चित्ते ऽपावृते प्रगटे आत्मलोके प्रत्यग्रूपे । ३ निराश्रयः । ४ अनवेक्षितात्मसाहाय्यः । ५ अप्रच्युतचिच्छक्तिः । ६ अर्वाचीनाः वस्तुस्वरूपासंस्पर्शिनो विकल्पवितर्कादयः येषु शास्त्रेषु तैः कलिलं व्याकुलमन्तःकरणमाश्रयो यस्य तेन दुराग्रहेण वादिनाम् । अत्र एवं वा एवं वेति विकल्पः । किमत्र युक्तमिति वितर्कः । इत्थमेवेति विचारः । तदनुग्राहकाः प्रमाणाभासाः । ७ विवादागोचरे । ८ मायामयः संसारः । ९ वस्तुतस्तु कर्तृत्वं नास्तीति न विरोधः ।

किंच सम विषममतीनामनुग्रहनिग्रहादिकं त्वन्मायया त्वयि स्फुरति॥३७॥स एव नानारूपेण सर्वगुणविषयाणां प्रकाशैर्लक्षितः सर्वांतर्यामित्वात् जीवस्यापि प्रकाशकः ॥ ३८ ॥ हे मधुमथन ! परमभक्ताः ये ते त्वयि निर्वृतमनसः संतस्त्वत्पदांबुजसेवां कथं विसृजंति ॥३९॥ हे त्रिविक्रम !



समविषममतीनां मतमनुसरसि यथा रज्जुखंडः सर्पादिधियाम् ॥ ३७ ॥ स एवहि पुनः सर्ववस्तुनि वस्तुस्वरूपःसर्वे श्वरः सकलजगत्कारणकारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ॥ ३८ ॥ अथ ह वा व तव महिमाऽमृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यंदमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसु खलेशाभासाः परमभागवता एकांतिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरंतरं निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशलाः ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणांबुजानुसेवां विसृजंति न यत्र पुनरयं संसार पर्यावर्तः ॥ ३९॥ त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चा पि तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दंडं दंडधरदधर्थ॥एवमे नमपि भगवञ्जहि त्वाष्ट्रमुत यदि मन्यसे ॥४०॥ अस्माकं तावकानां तव नतानां तत तातामह तव चरणनलिनयुग लध्यानानुबद्धहृदयनिगडानां स्वलिंगविवरणेनात्मसात्कृतानामनुकंपानुरंजितविशदरुचिरशिशिरस्मितावलोकेन विगलितमधुरमुखरसामृतकलया चांतस्तापमनघाऽर्हसि शमयितुम् ॥ ४१ ॥

दैत्याः दानवास्तवैव विभूतयोपि तासामयमुद्यमकालो न भवति इति मत्वा दंडं दधर्थ । एवं त्वाष्ट्रं जहि यदि मन्यसे ॥ ४० ॥ प्रथमं तावत् त्वदीयानामस्माकं तापं शमयितुमर्हसि ॥ ४१ ॥



१ सर्वजीवांतर्यामित्वात् । २ आत्मा त्वमेव प्रियः सुहृच्च येषां ते । ३ आत्मा स्वरूपम् । ४ त्रिलोकनायक । ५ पितः । ६ पितामह । ७ अनुबद्धो हृदये निगडो येषां तेषाम् । ८ स्वरूपप्रकटनेन ।

हे भगवन् ! सर्वसाक्षिणः परमात्मनस्तव किं विज्ञापनम् । अस्मदभिप्रायस्तु त्वया ज्ञात एव ॥ ४२ ॥ अतस्तव चरणकमलच्छायां यत्कामं प्राप्ताः वयं तत् कार्यं स्वयमेव संपादय ॥ ४३ ॥ हे कृष्ण ! येन तेजोऽस्त्रायुधानि ग्रस्तानि च नस्तं वृत्रं जहि ॥ ४४ ॥ शुद्धाय बुद्ध्यादिसाक्षिणे

अथ भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामंतर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्म[1]स्वरूपेण प्रधानरूपेण च यथादेशकालदेहावस्थानविशेषं तदुपादानोपलंभकतया[2]ऽनुभवतः सर्वप्रत्ययसाक्षिण आकाश[3]शरीरस्य साक्षात्परब्रह्मणः परमात्मनः कियानिह वा अर्थविशेषो विज्ञापनीयः स्याद्विस्फुलिंगादिभिरिव हिरण्यरेतसः॥४२॥ अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः॥४३॥ अथो ईश जहि त्वाष्ट्रं ग्रसंतं भुवनत्रयम्॥ग्रस्तानि येन नःकृष्ण तेजांस्यस्त्रायुधानि च॥४४॥हंसाय दह्र[4]निलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय[5]॥ सत्संग्रहाय भवपांथनिजाश्रमाप्तावंते परीष्टगतये[6] हरये नमस्ते॥ ४५ ॥ श्रीशुक उवाच ॥ अथैवमीडितो राजन्सादरं त्रिदशैर्हरिः ॥ स्वमुपस्थानमाकर्ण्य प्राह तानभिनंदितः ॥४६॥ श्रीभगवानुवाच ॥ प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया ॥ आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥४७॥ किं दुरापं मयि प्रीते तथाऽपि विबुधर्षभाः ॥ मय्येकांतमतिर्नान्यन्मत्तो वांछति तत्त्ववित् ॥४८॥ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक्॥ तस्य तानिच्छतो यच्छेद्यदि सोऽपि तथाविधः ॥ ४९ ॥

सदानंदरूपाय दुःखहराय हरये ते नमः ॥ ४५ ॥ श्रीशुक उवाच ॥ एवं देवैः स्तुतो हरिस्तानुवाच ॥ ४६॥४७ ॥ श्रीभगवानुवाच ॥ मयि प्रीते सति दुरापं किमस्ति ॥ ४८॥ कृपणो विषयान् वाञ्छन् स्वस्य श्रेयो न वेद ॥ ४९ ॥

---

१ प्रत्यगात्मांतर्यामी । २ तेषामुपादानस्योपलंभकतया । ३ आकाशवदवालितं शरीरं यस्य तस्य । ४ हृदयाकाशनिकेताय । ५ अनादये । ६ परितः सर्वतः पूजिता गतिर्यस्य तस्मै ।

विद्वान् प्रवृत्तिमार्गं मूढाय न वक्ति यथा वैद्यो रोगिणेऽपथ्यं न ददाति ॥ ५० ॥ हे इंद्र ! दधीचिऋषिं गत्वा तस्य शरीरं याचस्व । मा चिरम् ॥ ५१ ॥ सोऽश्वशिरसा प्रोक्तत्वादश्वशिरोनाम ब्रह्माऽश्विनीकुमाराभ्यामुपदिदेश॥५२॥स दधीचिर्मदात्मकं कवचं त्वष्ट्रे प्रादात् । त्वष्टा विश्वरूपाय यस्मात् त्वं धृतवानसि ॥५३॥ अतोऽश्विभ्यां सह याचितः सन् स स्वाङ्गानि युष्मभ्यं दास्यति । तदस्थिभिर्विश्वकर्मविनिर्मितःआयुधश्रेष्ठो वज्रो भविष्यति ॥ ५४ ॥ मत्तेजोयुक्तवज्रेण वृत्रशिरो हरिष्यसि । ततो भूयस्तेजोऽस्त्रायुधसंपदःप्राप्स्यथ । मत्परान् केऽपि न हिंसति ॥ ५५ ॥ इति श्रीभागवते षष्ठ०चू० नवमोऽध्यायः ॥ ९ ॥

स्वयं निश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म हि ॥ न राति रोगिणोऽपथ्यं वांछतो हि भिषक्तमः॥५०॥मघवन्यात भद्रं वो दध्यंचमृषिसत्तमम् ॥ विद्याव्रततपस्सारं गात्रं याचत मा चिरम् ॥ ५१ ॥ स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम्[1] ॥ यद्वा अश्वशिरोनाम तयोरमरतां[2] व्यधात् ॥ ५२ ॥ दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्माऽभेद्यं मदात्मकम् ॥ विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्ततः ॥ ५३ ॥ युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोंऽगानि दास्यति ॥ ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः ॥ ५४ ॥ येन वृत्रशिरो हर्ता मत्तेज उपबृंहितः ॥ तस्मिन्विनिहते यूयं तेजोस्त्रायुधसंपदः ॥ भूयः प्राप्स्यथ भद्रं वो न हिंसंति च मत्परान् ॥ ५५ ॥ इति श्रीभागवते महापुराणे षष्ठस्कंधे वृत्रवधार्थमिन्द्राद्युक्त भगवत्स्तोत्रं नाम नवमोऽध्यायः ॥ ९ ॥

---

१ ज्ञातवान् । २ एवमत्र प्रसिद्धा कथा—एकदाश्विनीकुमारौ प्रवर्ग्यब्रह्मविद्ययोर्नैपुणं दध्यंचमेत्य नौ विद्यां देहीत्यूचतुः । तदा स उवाच । अद्याहं कर्मणि स्थितः अतः पश्चाद् वक्ष्याम्यधुना गच्छतम् । ततस्तयोर्निर्गतयोरिंद्रस्तत्रैत्य मुनिं जगाद । हे मुने ! अश्विनौ यदि विद्यां ब्रवीषि तर्हि ते शिरश्छिद्यां नात्र संदेहः इत्युक्त्वा ययौ । इंद्रे गते तौ पुनस्तत्रैत्य द्विजं जगदतुःततो द्विजमुखादिंद्रगादितं निशम्योचतुः । हे मुने ! एवं तर्हि तव शिरश्छित्वाऽश्वमस्तकं संधास्यावः ततो नौ विद्यां ब्रूहि । ततः इन्द्रेण तच्छिरश्छिन्ने सति पुनः पूर्वमस्तकं त्वयि संधाय निजां दक्षिणां दत्त्वा गमिष्यावः एवं श्रुत्वा दधीचिरश्वशिरसा तयोः प्रवर्ग्यं ब्रह्मविद्यां प्रोवाचेति । ३ जीवन्मुक्तत्वम् ।

ततश्चित्रकेतुर्द्विजोक्तिभिः प्राप्तज्ञानः सन् गृहांधकूपात् निष्क्रम्य ॥ १५ ॥ कालिंद्यां स्नात्वा तर्पणादि कृत्वा ब्रह्मपुत्राववंदत॥१६॥ तदा प्रपन्नाय तस्मै नारदः एतां विद्यां प्रोवाच ॥ १७ ॥ भगवते वासुदेवाय प्रद्युम्नायाऽनिरुद्धाय संकर्षणाय च नमोऽस्तु ॥ १८ ॥ आत्मारामाय परमानंदमूर्तये नमः ॥ १९ ॥ हृषीकेशाय विश्वमूर्तये नमः ॥ २० ॥ इंद्रियेषु शान्तेषु यः प्रकाशते स सदसत्परोऽस्मान् रक्षतु ॥ २१ ॥ यस्मिन् जगत्

स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः ॥ गृहांधकूपान्निष्क्रांतः सरःपंकादिव द्विपः॥१५॥ कालिंद्यां विधिवत्स्नात्वा कृतपुण्यजलक्रियः॥ मौनेन संयतप्राणो ब्रह्मपुत्राववंदत ॥१६॥ अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने ॥ भगवान्नारदः प्रीतो विद्यामेतामुवाच ह ॥१७॥ ॐनमस्तुभ्यं भगवते वासुदेवाय धीमहि ॥ प्रद्युम्नायाऽनिरुद्धाय नमः संकर्षणाय च ॥ १८ ॥ नमो विज्ञानमात्राय परमानंदमूर्तये ॥ आत्मारामाय शांताय निवृत्तद्वैतदृष्टये ॥ १९ ॥ आत्मानंदाऽनुभूत्यैव न्यस्तशक्त्यूर्मये नमः॥ हृषीकेशाय महते नमस्ते विश्वमूर्तये ॥२०॥ वचस्युपरते प्राप्य य एको मनसा सह ॥ अनामरूपश्चिन्मात्रः सोऽव्यान्नः सदसत्परः ॥ २१ ॥ यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते ॥ मृण्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ॥२२॥ यन्न स्पृशंति न विदुर्मनोबुद्धींद्रियासवः ॥ अंतर्बहिश्च विततं व्योमवत्तन्नतोऽस्म्यहम् ॥२३॥ देहेंद्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरंति कर्मसु ॥ नैवाऽन्यदा लोहमिवाप्रतप्तं स्थानेषु तद्द्रष्ट्रपदेशमेति ॥ २४ ॥ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविंदयुगल परमपरमेष्ठिन्नमस्ते ॥ २५ ॥

तिष्ठति यतः उत्पद्यते नश्यति च तस्मै ब्रह्मणे नमः ॥२२ ॥ बुद्ध्यादयो यं न विदुः तं हरिं नतोऽस्मि ॥२३ ॥ देहेंद्रियमनआदयो यस्य चैतन्येन स्वस्वकर्मसु प्रचरंति तस्मै नमः ॥ २४ ॥ ॐ नमो भगवते महापुरुषाय महाविभूतिपतये नमोस्तु ॥ २५ ॥

१ ध्यायेम मनसा नमस्यामेत्यर्थः । २ निवृत्ता द्वैतदृष्टिर्यस्मात् तस्मै । ३ निरस्ताः मायानिमित्ता रागद्वेषादयो येन तस्मै । ४ वच इति सर्वेन्द्रियोपलक्षणम् । ५ सुषुप्तिमूर्च्छादौ । ६ स्थानेषु जाग्रदादिषु । ७ द्रष्टृसंज्ञं जीवमपि तदैवैति जानाति न तु जीवस्तज्जानातीत्यर्थः ।

श्रीशुक उवाच ॥ नारदो भक्तायैतां विद्यामादिश्यांगिरसा सह ब्रह्मलोकं ययौ ॥ २६ ॥ चित्रकेतुरब्भक्षः सन् नारदोक्तांविद्यां सप्ताहं धारयामास ॥२७ ॥ ततः सप्तरात्रांते तया विद्याधराधिपत्यं लेभे ॥ २८ ॥ ततः कतिपयैर्दिवसैर्मनोगत्या शेषस्य चरणांतिकं जगाम॥२९॥तत्र मृणालगौरं नीलांबरं किरीटकयूरकटिसूत्रकंकणैर्युतं सिद्धेश्वरैर्वेष्टितं प्रभुं ददर्श॥३०॥ तद्दर्शनेन गतकिल्बिषो हृष्टरोमा प्रेमाश्रुलोचनश्चित्रकेतुर्भक्त्या नत्वा

श्रीशुक उवाच ॥ भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः॥ययाऽवंगिरसा साकं धाम स्वायंभुवं प्रभो॥२६॥चित्रकेतुस्तु विद्यां तां यथा नारदभाषिताम् ॥ धारयामास सप्ताऽहमब्भक्षः सुसमाहितः ॥२७॥ ततश्च सप्तरात्रांते विद्यया धार्यमाणया ॥ विद्याधराधिपत्यं स लेभेऽप्रतिहतं नृप ॥ २८ ॥ ततः कतिपयाऽहोभिर्विद्ययेद्धमनोगतिः॥ जगाम देवदेवस्य शेषस्य चरणांतिकम् ॥ २९ ॥ मृणालगौरं शितिवाससं स्फुरत्किरीटकेयूरकटित्रकंकणम् ॥ प्रसन्नवक्त्राऽरुणलोचनं तं ददर्श सिद्धेश्वरमंडलैः प्रभुम् ॥३०॥ तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वच्छाऽमलांतःकरणोऽभ्ययान्मुनिः॥ प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमाऽनमदादिपूरुषम् ॥ ३१ ॥ स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपमेहयन्मुहुः ॥ प्रेमोपरुद्धाऽखिलवर्णनिर्गमो नैवाशकत्तं प्रसमीडितुं चिरम् ॥ ३२ ॥ ततः समाधाय मनो मनीषया बभाष एतत्प्रतिलब्धवागसौ ॥ नियम्य सर्वेंद्रियबाह्यवर्तनं जगद्गुरुं सात्वतशास्त्रविग्रहम्[१] ॥ ३३ ॥ चित्रकेतुरुवाच ॥ अजित जितः सममतिभिः साधुभिर्भवाञ्जितात्मभिर्भवता॥ विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः ॥ ३४ ॥ तव विभवः खलु भगवञ्जगदुदयस्थितिलयादीनि ॥ विश्वसृजस्तेंऽशांशास्तत्रमृषा स्पर्धंते पृथगभिमत्या ॥ ३५ ॥

॥३१ ॥ प्रेमव्याप्तस्तस्य स्तवनं कर्तुं न शशाक ॥ ३२ ॥ ततो मनः स्थिरं कृत्वा जगद्गुरुं तुष्टाव ॥ ३३ ॥ चित्रकेतुरुवाच हे अजित ! भवान् भक्तैर्जितोऽसि। त्वं भक्तानात्मसमान् करोषि ॥ ३४ ॥ हे ईश ! जगतः उत्पत्तिस्थितिलयादीनि तवैव विभवोऽस्ति ॥ ३५ ॥

१ सात्वतशास्त्र विग्रहो यस्य तम् ।

आद्यंतमध्यरहितः सूक्ष्मं मूलकारणं त्वमेव ॥३६॥ हे भगवन् ! अयमांडकोशः क्षित्यादिभिः सप्तावरणैः संवेष्टितः सन् त्वयि परमाणुवत् परिभ्रमति । तस्मात् त्वमनंतोसि ॥ ३७ ॥ ये नरपशवस्त्वां विहाय तव विभूतीरुपासते तेषां मनोरथाः नश्यंति ॥ ३८ ॥ विषयकामेनापि कृता

परमांणुपरममहतोस्त्वमाद्यंताऽतरवर्ती त्रयविधुरः आदावंतेऽपि च सत्त्वांनां यद् ध्रुवं तदेवांतरालेऽपि ॥ ३६ ॥ क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैरांडकोशः ॥ यत्र पतत्यणुकल्पः सहांडकोटिकोटिभिस्तदनंतः ॥ ॥ ३७ ॥ विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम् तेषामाशिष ईश तदनु विनश्यंति यथा राजकुलम् ॥ ३८ ॥ कामधियस्त्वयि रचितान परमारोहंति यथा करंभबीजांनि ॥ ज्ञानात्मन्यगुणमये गुणगणतोऽस्यं द्वंद्वजालानि ॥ ३९ ॥ जितमजित तदा भवता यदाह भागवतं धर्ममनवद्यम् ॥ निष्किंचना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय ॥४०॥ विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति च यदन्यत्र ॥ विषमधिया रचितो यःसह्यविशुद्धः क्षयिष्णुरधर्मबहुलः ॥ ४१ ॥ कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेण ॥ स्वद्रोहात्तव कोपः परसंपीडयाच तथाऽधर्मः ॥ ४२ ॥ न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः ॥ स्थिरचरसत्त्वकदंबेष्वपृथग्धियो यमुपासते त्वार्याः ॥ ४३ ॥ न हि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः॥यन्नामसकृच्छ्रवणात्पुल्कसकोऽपि विमुच्यते संसारात् ॥ ४४ ॥

त्वत्सेवा मोक्षफलैव भवति ॥ ३९ ॥ हे अजित ! सनकादयो मोक्षाय त्वामुपासते ॥ ४० ॥ यद्भगवद्धर्मे विषमा मतिर्न ॥ ४१ ॥स्वपरद्रोहात् कः क्षेमाय कल्पते ॥ ४२ ॥ ज्ञानिनस्त्वद्धर्मान् सेवंते। त्वां चोपासते ॥ ४३ ॥ हे भगवन् ! त्वद्दर्शनात् नृणां पापक्षयः ॥ ४४ ॥



१ परमाणुः सूक्ष्ममूलकारणम् । परममहदन्तिमं कार्यम् । तयोरादावन्ते मध्ये च वर्तितुं शीलं यस्य सः । २ आदिमध्यान्तशून्यः । ३ पूर्वोक्तं हेतुः सत्त्वेन प्रतीतानां कार्याणामादावंतेऽपि यद् ध्रुवं तदेवान्तरालेऽपि ध्रुवमनपायि सुवर्णादिवत् । ४ पूर्वस्मात्पूर्वस्माद्दशगुणमुत्तरोत्तरैरावृतः । ५ इन्द्रादीन् । ६ राजकुलनाशमनु तत्सेवकानाम् । ७ भर्जितबीजानि । ८ जवित्य । ९ अत्यन्तकायक्लेशात् । उक्तं च गीतासु । 'कर्षयन्तः शरीरस्थं भूतग्राममचेतसः । मां चैवांतःशरीरस्थ तान्विद्ध्यासुरनिश्चयान् । १० स्थावरजंगमप्राणिसमूहेषु ।

हे भगवन् ! अधुना तव दर्शनेन कृतार्थोस्मि । नारदोपदेशो मिथ्या कथं भवति ॥ ४५ ॥ जनैः सर्वांऽतर्यामिणस्तव किं प्रार्थितव्यम् ॥४६॥ अतः कुयोगिनां दुर्दर्शाय परमहंसाय नमः ॥ ४७ ॥ यस्य मूर्धनि भूमंडलं सर्षपायति तस्मै ते सहस्रमूर्ध्ने नमः ॥ ४८ ॥ श्रीशुक उवाच ॥ एवं स्तुतोऽनंतो विद्याधरपतिं जगाद॥४९॥श्रीभगवानुवाच॥ हे राजन् ! नारदांऽगिरोभ्यामुक्तोपदेशरूपविद्यया मद्दर्शनाच्च त्वं सिद्धोसि॥५०॥ हे

अथ भगवन्वयमधुना त्वदवलोकपरिमृष्टाशयमलाः ॥ सुरऋषिणा यदुदितं तावकेन कथमन्यथा भवति ॥ ४५ ॥
विदितमनंत समस्तं तव जगदात्मना जनैरिहाचरितम् ॥ विज्ञाप्यं परमगुरोः कियदिव सदिव सवितुरिव खद्योतैः ॥४६ ॥ नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय ॥ दुर[1]वसितात्मगतये कुयोगिनां भिदां[2] परमहंसाय॥४७॥
यं वै श्वसंतमनु विश्वसृजः श्वसंति यं चे[3]कितानमनु चि[4]त्तय उच्चकंति ॥ भूमंडलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥ ४८ ॥ श्रीशुक उवाच ॥ संस्तुतो भगवानेवमनंतस्तमभाषत ॥ विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह ॥ ४९ ॥ श्रीभगवानुवाच ॥ यन्नारदांऽगिरोभ्यां ते व्याहृतं मेऽनुशासनम् ॥ संसिद्धोऽसि तया राजन्विद्यया दर्शनाच्च मे ॥ ५० ॥ अहं वै सर्वभूतानि भूतात्मा भूतभावनः ॥ शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू ॥ ५१ ॥
लोके विततमात्मानं लोकं चात्मनि संततम् ॥ उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ॥ ५२ ॥ तया सुषुप्तः पुरुषो विश्वं पश्यति चात्मनि ॥ आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ॥ ५३ ॥ एवं जागरणादीनि जीवस्थानानि चात्मनः ॥ मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ॥ ५४ ॥

राजन् ! सर्वभूतानामहमात्मा विश्वं मद्व्यतिरिक्तं नास्ति ॥ ५१ ॥ भोक्तृभोग्यात्मकमुभयं मयि व्याप्तं पश्येत ॥५२॥ यथा स्वप्ने सुप्तो गिरिवनादिरूपं देशांतरस्थमात्मन्येव पश्यति तथा स्वप्न एवोत्थितः सन् जाग्रदवस्थामनुभवति ॥ ५३ ॥ एवं प्रसिद्धान्यपि जाग्रदादीन्यात्मनो मायामात्राणि इत्येवं विज्ञाय तदवस्थारहितमात्मानं स्मरेत् ॥ ५४ ॥

१ अविज्ञाता । २ भेदबुद्ध्या । ३ पश्यन्तम् । ४ ज्ञानेंद्रियाणि । ५ स्वारूढं पश्यन्ति ।

जीवो येन रूपेण निद्रायां निर्गुणं सुखं वेद तमात्मानं मां जानीहि ॥५५॥ जाग्रत्स्वप्नयोः स्मरतः पुंसस्तयोः प्रकाशकत्वेन यत् जानाति तत् ज्ञानं ब्रह्म ॥५६॥ यदा मत्स्वरूपं विस्मृतं तदाऽऽत्मनः सकाशाद् भिन्नं भवति। ततः पुंसः संसृतिरूपः संसारो भवति॥५७॥ इह मानुषीं योनिं लब्ध्वा यः आत्मानं न वेद स कुत्रापि सुखं नाप्नुयात् ॥५८॥ कविः प्रवृत्तिमार्गात् क्लेशो निवृत्तिमार्गाद् मोक्षः इति स्मृत्वा संकल्पाद् विरमेत्

येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा ॥ सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि माम् ॥ ५५ ॥ उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः ॥ अन्वेति व्यतिरिच्येत यज्ज्ञानं ब्रह्म तत्परम् ॥ ५६ ॥ यदेतद्विस्मृतं पुंसो मद्भावं भिन्नमात्मनः ॥ ततः संसार एतस्य देहाद्देहोमृतेर्मृतिः ॥ ५७ ॥ लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसंभवाम् ॥ आत्मानं यो न बुध्येत न क्वचिच्छममाप्नुयात् ॥ ५८ ॥ स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम् ॥ अभयं चाप्यनीहायां संकल्पाद्विरमेत्कविः ॥५९॥ सुखाय दुःखमोक्षाय कुर्वाते दंपती क्रियाः ॥ ततो निवृत्तिरप्राप्तिर्दुःखस्य च सुखस्य च ॥६०॥ एवं विपर्ययं बुद्ध्वा नृणां विज्ञाऽभिमानिनाम् ॥ आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणाम् ॥६१॥ दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा ॥ ज्ञानविज्ञानसंतुष्टो मद्भक्तः पुरुषो भवेत् ॥ ६२ ॥ एतावानेव मनुजैर्योगनैपुणबुद्धिभिः ॥ स्वार्थः सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनम् ॥ ६३ ॥

॥५९॥ किं च दंपती सुखाय दुःखनाशाय क्रियाः कुर्वाते। ततः किमपि न भवति ॥६०॥ एवं नृणां विपर्ययमात्मनश्च सूक्ष्मां गतिं बुद्ध्वा॥६१॥ दृष्टश्रुतविषयैर्मुक्तः सन् ज्ञानविज्ञानतुष्टो मम भक्तो भवेत् ॥ ६२ ॥ योगनैपुण्यबुद्धिभिर्यत् स्वपरयोरेकदर्शनं स एव स्वार्थः ॥ ६३ ॥

---

१ यज्ज्ञानं प्रस्वापप्रतिबोधयोः प्रकाशकत्वेनान्वेति ताभ्यां व्यतिरिच्यते च तद्ब्रह्म। २ पुनरपि जननं पुनरपि मरणम्। ३ शास्त्रोक्तस्याऽपरोक्षस्य च ज्ञानस्य संभवो यस्यां ताम्। ४ विज्ञाः उधमे प्रवीणाः वयमित्यभिमानिनाम्। ५ ऐहिकामुष्मिकविषयः।

एवं मम वचो धारयन् ज्ञानविज्ञानसंपन्नस्त्वमाशु सिध्यसि॥६४॥श्रीशुक उवाच॥एवं हरिश्चित्रकेतुमाश्वास्यांतर्दधे॥६५॥इति श्रीभा० षष्ठ० चू० षोडशोऽध्यायः॥१६॥ततःसप्तदशेऽमोघमहर्द्धिं प्राप्य खं चरन्॥ विहस्य गिरिशं शापादुमाया वृत्रतां गतः॥१॥श्रीशुक उवाच॥हे राजन्! चित्रकेतुर्यस्यां दिशि भगवान् गुप्तस्तस्यै दिशे नमः कृत्वागगनेचरश्चचार॥१॥सोऽव्याहतबलेन्द्रियः सिद्धादिभिः स्तूयमानः॥२॥विद्याधरस्त्रीभिःसह हरिं गापयन् कुलाचलेंद्रद्रोणीषु रेमे॥३॥ एकदा विष्णुदत्तविमानेन भ्रमन् गिरिशं ददर्श॥४॥मुनिसभायां देवीमालिंग्य स्थितं शिवं दृष्ट्वा देव्या

त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम॥ ज्ञानविज्ञानसंपन्नो धारयन्नाशु सिध्यसि॥६४॥श्रीशुक उवाच॥ आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः॥ पश्यतस्तस्य विश्वात्मा ततश्चांतर्दधे हरिः॥ ६५ ॥ इति श्रीभागवते महापुराणे षष्ठस्कंधे चित्रकेतोस्तत्त्वोपदेशो नाम षोडशोऽध्यायः॥१६॥छ॥ श्रीशुक उवाच॥ यतश्चांतर्हितोऽनंतस्तस्यै कृत्वा दिशे नमः॥ विद्याधरश्चित्रकेतुश्चचार गगनेचरः॥१॥स लक्षं वर्षलक्षाणामव्याहतबलेंद्रियः॥स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः॥ २ ॥ कुलाचलेंद्रद्रोणीषु नानासंकल्पसिद्धिषु॥ रेमे विद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम्॥ ३ ॥ एकदा स विमानेन विष्णुदत्तेन भास्वता॥ गिरिशं ददृशे गच्छन्परीतं सिद्धचारणैः॥४॥ आलिंग्याङ्कीकृतां देवीं बाहुना मुनिसंसदि॥ उवाच देव्याः शृण्वंत्या जहासोच्चैस्तदंतिके॥ ५ ॥ चित्रकेतुरुवाच॥ एष लोकगुरुः साक्षाद्धर्मं वक्ता शरीरिणाम्॥ आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया॥ ६ ॥ जटाधरस्तीव्रतपा ब्रह्मवादी सभापतिः॥अंगीकृत्य स्त्रियं चास्ते गतह्रीः प्राकृतो यथा॥७॥प्रायशःप्राकृतश्चापि स्त्रियं रहसि बिभ्रति॥ अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम्॥८॥श्रीशुक उवाच॥भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृप॥तूष्णीं बभूव सदसि सभ्याश्च तदनुव्रताः॥९॥

शृण्वंत्याः उच्चैर्हसित्वा जगाद॥ ५ ॥ चित्रकेतुरुवाच॥ अयं लोकगुरुः।साक्षाद् देहिनां धर्मवक्ता सभायां भार्यामंगीकृत्यास्ते॥६॥अहो जटाधरो गतह्रीःप्राकृत इवास्ते॥७॥ प्राकृता अपि प्रायःस्त्रियं रहसि बिभ्रति।अयं तु सदसि बिभर्ति॥८॥श्रीशुक उवाच॥एवं तद्वचः श्रुत्वा शिवःसभ्याश्च

तूष्णीमासन् ॥ ९ ॥ एवं बह्वशोभनं ब्रुवाणे सति देवी क्रोधेन तस्मै जगाद ॥ १० ॥ पार्वत्युवाच ॥ अधुना लोकोऽयं दंडधरोऽस्मद्विधानां शास्ता किम् ॥ ११ ॥ ब्रह्मनारदादयो धर्मं न विदुः ये शास्त्रमुल्लंघ्य वर्तमानं हरं न निषेधंति ॥ १२ ॥ योऽयं क्षत्रबंधुर्ब्रह्मादीनज्ञान् कृत्वाशिवं शास्ति स दंड्यः ॥१३॥ अयं वैकुंठपादमूलं गंतुं नार्हति ॥१४॥ अतो हे दुर्मते ! त्वमासुरीं योनिं याहि । भूयो महतामपराधं न कर्तासि॥१५॥

इत्येतद्वीर्यविदुषि ब्रुवाण बह्वशोभनम् ॥ रुषाऽऽहदेवी धृष्टाय निर्जितात्माऽभिमानिने ॥ १० ॥ पार्वत्युवाच ॥ अयं किमधुना लोके शास्ता दंडधरःप्रभुः॥अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत्॥११॥न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्रा न तु नारदाद्याः ॥ न वै कुमारः कपिलो मनुश्च ये नो निषेधंत्यतिवर्तिनं हरम्॥ १२ ॥ एषामनुध्येयपदाब्ज युग्मं जगद्गुरुं मंगलमंगलं स्वयम् ॥ यः क्षत्रबंधुः परिभूय सूरीन् प्रशास्ति धृष्टस्तदयं हि दंड्यः ॥१३॥नाऽयमर्हति वैकुंठपादमूलोपसर्पणम् ॥ संभावितमतिः स्तब्धः साधुभिः पर्युपासितम् ॥ १४ ॥ अतः पापीयसीं योनिमासुरीं याहि दुर्मते ॥ यथेह भूयो महतां न कर्ता पुत्र किल्बिषम् ॥ १५ ॥ श्रीशुक उवाच ॥ एवं शप्तश्चित्रकेतुर्विमानादव रुह्य सः ॥ प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत ॥ १६ ॥ चित्रकेतुरुवाच ॥ प्रतिगृह्णामि ते शापमात्मनोऽजलिनांबिके ॥ देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥ १७ ॥संसारचक्र एतस्मिञ्जन्तुरज्ञानमोहितः ॥ भ्राम्यन्सुखं च दुःखं च भुंक्ते सर्वत्र सर्वदा ॥ १८ ॥ नैवात्मा न परश्चापि कर्ता स्यात्सुखदुःखयोः ॥ कर्तारं मन्यते प्राज्ञ आत्मानं परमेव च ॥ १९॥ गुणप्रवाह एतस्मिन्कः शापः को न्वनुग्रहः॥ कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा ॥ २०॥

श्रीशुक उवाच ॥ एवं देव्या शप्तश्चित्रकेतुर्विमानादुत्तीर्य देवीं प्रणम्याह ॥ १६ ॥ चित्रकेतुरुवाच ॥ हे अंबिके ! तव शापं प्रगृह्णामि ॥ १७ ॥ अज्ञानमोहितो जंतुः संसारे भ्रमन् सर्वत्र सुखं दुःखं च भुंक्ते ॥ १८ ॥ जंतोः सुखदुःखकर्ताऽऽत्मा परो न ॥ १९ ॥ अस्मिन् संसारे कः शापः कोऽनुग्रहः कः स्वर्गः को नरकः सुखं दुःखं च किम् ॥ २० ॥

भगवान् मायया भूतानि तेषां बंधं मोक्षं सुखं दुःखं च सृजति॥२१॥तस्य कश्चित् प्रियोऽप्रियो न। तस्य प्रीतिः रोषश्च कुतः ॥२२॥ तथापि शरीरिणां सुखदुःखादि सर्वं मायाजनितमस्ति॥२३॥ अतो हे देवि! शापमोक्षाय त्वां न प्रार्थये। किं तु ममोक्तमपराधं क्षमस्व॥ २४ ॥ इत्युक्त्वा तौ प्रसाद्य जगाम ॥ २५ ॥ ततः सर्वेषां शृण्वतां रुद्रो रुद्राणीं जगाद ॥ २६ ॥ हे देवि! हरेर्भक्तानां माहात्म्यं द्रष्टवत्यसि ॥ २७ ॥ नारा

एकः सृजति भूतानि भगवानात्ममायया ॥ एषां बंधं च मोक्षं च सुखं दुःखं च निष्कलः ॥ २१ ॥ न तस्य कश्चिद्दयितः प्रतीपो न ज्ञातिर्बंधुर्न परो न च स्वः ॥ समस्य सर्वत्र निरंजनस्य सुखेन रागः कुत एव रोषः ॥२२॥ तथाऽपि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय ॥ बंधाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतयेऽवकल्पते ॥ २३ ॥ अथ प्रसादये न त्वां शापमोक्षाय भामिनि ॥ यन्मन्यसे असाधूक्तं मम तत्क्षम्यतां सति ॥ २४ ॥ श्रीशुक उवाच ॥ इति प्रसाद्य गिरिशौ चित्रकेतुररिंदम ॥ जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः ॥२५॥ ततस्तु भगवान्रुद्रो रुद्राणीमिदमब्रवीत् ॥ देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम्॥२६॥श्रीरुद्र उवाच ॥ दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः ॥ माहात्म्यं भृत्यभृत्यानां निस्स्पृहाणां महात्मनाम् ॥ २७ ॥ नारायणपराः सर्वे न कुतश्चन बिभ्यति ॥ स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥२८॥ देहिनां देहसंयोगाद्द्वंद्वानीश्वरलीलया ॥ सुखं दुःखं स्मृतिर्जन्म शापोऽनुग्रह एव च ॥२९ ॥ अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि ॥ गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः ॥३०॥ वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् ॥ ज्ञानवैराग्यवीर्याणां नेह कश्चिद्व्यपाश्रयः ॥ ३१ ॥

यणपराः कुतश्चन न बिभ्यति। ते स्वर्गनरकेऽपि समदर्शिनः संति ॥ २८ ॥ देहिनां देहसंयोगाद् सुखदुःखादिद्वंद्वानि भवंति ॥ २९ ॥ पुंसोऽविवेकेनात्मनि भेदो जातः ॥ ३० ॥ ईशभक्तानां कश्चिदर्थो नास्ति ॥ ३१ ॥

१ सुखादिभेदः।

अहं ब्रह्मा नारदाऽऽदयो यस्येच्छितं न विदाम ॥ ३२ ॥ हरिः सर्वभूतप्रियः ॥३३॥ यस्यायं भक्तः । अहं च विष्णुभक्तः । अतो मम क्रोधस्त
स्मिन् नाभूत् ॥ ३४ ॥ तस्मात् तद्भक्तेषु त्वया विस्मयो न कार्यः ॥ ३५ ॥ श्रीशुक उवाच ॥ इति शिवभाषितं श्रुत्वोमा शांता बभूव ॥३६॥
चित्रकेतुः देवीं शप्तुं समर्थोपि शापमेव जगृहे एतावत् साधुलक्षणम् ॥ ३७ ॥ ततः स दैत्ययोनिमाश्रित्य त्वष्टुर्दक्षिणाग्नौ ज्ञानविज्ञानसंयुक्तो
वृत्रनाम्ना जज्ञे ॥ ३८ ॥ एतद् वृत्रस्य कारणं ते कथितम् ॥ ३९ ॥ इमं चित्रकेतोरितिहासं विष्णुभक्तमाहात्म्यं श्रुत्वा बंधान्मुच्यते ॥ ४० ॥

नाहं विरिंचो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः॥विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीशमानि
नः॥३२॥न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ॥ आत्मत्वात्सर्वभूतानां सर्वभूतप्रियो हरिः॥३३॥तस्य
चायं महाभागश्चित्रकेतुः प्रियोऽनुगः॥सर्वत्र समदृक्छांतो ह्यहं चैवाच्युतप्रियः ॥३४॥तस्मान्न विस्मयः कार्यः पुरुषेषु
महात्मसु ॥ महापुरुषभक्तेषु शांतेषु समदार्शिषु॥३५॥श्रीशुक उवाच ॥ इति श्रुत्वा भगवतः शिवस्योमाभिभाषितम्॥
बभूव शांतधी राजन्देवी विगतविस्मया॥३६॥इति भागवतो देव्याः प्रतिशप्तुमलंतमः॥मूर्ध्ना संजगृहे शापमेतावत्साधु
लक्षणम्॥३७॥जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः ॥ वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः॥३८॥एतत्ते सर्व
माख्यातं यन्मां त्वं परिपृच्छसि॥वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः॥३९॥ इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः॥
माहात्म्यं विष्णुभक्तानां श्रुत्वा बंधाद्विमुच्यते॥४०॥य एतत्प्रातरुत्थाय श्रद्धया वाग्यतः पठेत् ॥इतिहासं हरिं स्मृत्वा
स याति परमां गतिम् ॥४१॥ इति श्रीभा०म०षष्ठस्कंधे चित्रकेतोः शापस्वीकरणं नाम सप्तदशोऽध्यायः ॥ १७ ॥
श्रीशुक उवाच॥ पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतिं त्रयीम् ॥अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान्॥१॥

यः एतत् प्राप्य श्रद्धया शृणुयाद् वा पठेद् वा हरिं स्मृत्वा स परां गतिं याति ॥ ४१ ॥ इति श्रीभागव०षष्ठ०चू० सप्तदशोऽध्यायः ॥ १७ ॥
अदितेः पंचमादीनां पुत्राणामन्वयोक्तिभिः ॥ अष्टादशे दितेर्गर्भे शक्रेण मरुतां भिदा ॥ १ ॥ श्रीशुक उवाच ॥ अथ सवितुः पृश्निपत्न्यां
कन्याः तिस्रः—सावित्री १ व्याहृतिः २ त्रयी ३ पुत्राः पञ्च—अग्निहोत्रं १ पशुयागः २ सोमयागः ३ चातुर्मास्यः ४ महामखः ५ इति जज्ञे॥१॥

भगस्य सिद्धिनाम्न्यां भार्यायां महिमानः१ विभुः २ प्रभुः ३ आशीः १ कन्या च जज्ञे ॥ २ ॥ धातुः सिनीवाली दर्शम् । कुहूः सायम्।राका प्रातः। अनुमतिः पूर्णमासम् । एवं ताः प्रासूयंत ॥ ३ ॥ वरुणस्य चर्षण्यां भृगुर्वाल्मीकिश्च जातः ॥४॥ अगस्त्यवसिष्ठौ मित्रावरुणयोः पुत्रौ ॥ ५ ॥ मित्रस्य रेवत्यामुत्सर्गः १ अरिष्टः २ पिप्पलः ३ ॥ ६ ॥ इंद्रस्य पौलोम्यां जयंतऋषभमीढुषाः त्रयः ३ अभवन् ॥ ७ ॥ वामनस्य

सिद्धिर्भगस्य भार्यांग महिमानं विभुं प्रभुम् ॥ आशिषं च वरारोहां कन्यां प्रासूत सुव्रताम् ॥२ ॥ धातुः कुहूः सिनी वाली राका चानुमतिस्तथा ॥ सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् ॥ ३॥ अग्नीन्पुरीष्यानाधत्त क्रियायां समनं तरः ॥ चर्षणी वरुणस्यासीद्यस्यां जातो भृगुः पुनः ॥ ४ ॥ वाल्मीकिश्च महायोगी वल्मीकादभवत्किल ॥ अगस्त्य श्च वसिष्ठश्च मित्रावरुणयोर्ऋषी ॥ ५ ॥ रेतः सिषिचतुः कुंभे उर्वश्याः सन्निधौ द्रुतम्॥रेवत्यां मित्र उत्सर्गमरिष्टं पि प्पलं व्यधात् ॥ ६ ॥ पौलोम्यामिंद्र आधत्त त्रीन्पुत्रानिति नः श्रुतम् ॥ जयंतमृषभं तात तृतीयं मीढुषं प्रभुः॥७॥ उरुक्रमस्य देवस्य मायावामनरूपिणः ॥ कीर्तिपत्न्यांबृहच्छ्लोकस्तस्यासन्सौभगादयः॥ ८ ॥ तत्कर्मगुणवीर्याणि काश्यपस्य महात्मनः ॥ पश्चाद्वक्ष्यामहेऽदित्यां यथैवावततार ह ॥ ९॥ अथ कश्यपदायादान्दैतेयान्कीर्तयामिते ॥ यत्र भागवतः श्रीमान्प्रह्लादो बलिरेव च ॥ १० ॥ दितेर्द्वावेव दायादौ दैत्यदानववंदितौ॥ हिरण्यकशिपुर्नामहिरण्या क्षश्च कीर्तितौ ॥ ११ ॥ हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी ॥ जंभस्य तनया दत्ता सुषुवे चतुरः सुतान् ॥ १२॥ संह्लादं प्रागनुह्लादं ह्लादं प्रह्लादमेव च ॥ तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत् ॥१३ ॥

कीर्त्यां बृहच्छ्लोकः तस्य सौभगादयः पुत्राः आसन् ॥ ८ ॥ वामनस्य वीर्याणि अष्टमस्कन्धे वक्ष्यंते ॥ ९॥ अथ दितेर्वंशं शृणु ॥१०॥कश्यपाद् दित्यां हिरण्याक्षः हिरण्यकशिपुश्च जातौ॥११॥ हिरण्यकशिपोः कयाध्वां चत्वारः पुत्राः॥१२॥ संह्लादः१अनुह्लादः २ ह्लादः ३ प्रह्लादः ४ इति कन्या सिंहिका चाभूत् । तां विप्रचित्तिर्जग्राह । तस्यां राहुः ॥ १३ ॥

१ अग्नीन्पंचचितात् । २ समनन्तरो विगता ।

यस्य शिरो हरिर्जहार । संह्रादात् कृत्यां पंचजनो जज्ञे ॥ १४ ॥ ह्रादात् धमन्यामिल्वको वातापिश्च जातौ ॥ १५ ॥ अनुह्रादात् सूर्म्यायां बाष्कलमहिषौ प्रह्लादात् देव्यां विरोचनः । तस्य बलिः ॥ १६ ॥ बलेरशनाभार्यायां बाणज्येष्ठं पुत्रशतं बभूव ॥ १७ ॥ बाणः शिवस्य गणमुख्यतां प्राप ॥ १८ ॥ कश्यपाद् दित्यां मरुतः एकोनपंचाशत् ४९ अभवन् । ते इंद्रेण समानरूपतां नीताः ॥१९॥ राजोवाच॥ हे गुरो! ते आसु

शिरोऽहरद्यस्य हरिश्चक्रेण पिबतोऽमृतम् ॥ संह्रादस्य कृतिर्भार्याऽसूत पंचजनं ततः ॥ १४ ॥ ह्रादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् ॥ योऽगस्त्याय त्वतिथये पेचे वातापिमिल्वलम् ॥ १५ ॥ अनुह्रादस्य सूर्म्यायां बाष्कलो महिषस्तथा ॥ विरोचनस्तु प्राह्लादिर्देव्यास्तस्याभवद्बलिः ॥ १६ ॥ बाणज्येष्ठं पुत्रशतमशनायां ततोऽभवत् ॥ तस्यानुभावः सुश्लोक्यः पश्चादेवाभिधास्यते ॥ १७ ॥ बाण आराध्य गिरिशं लेभे तद्गणमुख्यताम् ॥ यत्पार्श्वे भगवानास्ते ह्यद्यापि पुरपालकः ॥ १८ ॥ मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः ॥ त आसन्नप्रजाः सर्वे नीता इंद्रेण सात्मताम् ॥ १९ ॥ राजोवाच ॥ कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो ॥ इन्द्रेण प्रापिताः सात्म्यं किं तत्साधु कृतं हि तैः ॥ २० ॥ इमे श्रद्दधते ब्रह्मन्नृषयो हि मया सह ॥ परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि ॥ २१ ॥ सूत उवाच ॥ तद्विष्णुरातस्य स बादरायणिर्वचो निशम्यादृतमल्पमर्थवत् ॥ सभाजयन्संनिभृतेन चेतसा जगाद सत्रायण[1] सर्वदर्शनः ॥ २२ ॥ श्रीशुक उवाच ॥ हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना ॥ मन्युना शोकदीप्तेन ज्वलंती पर्यचिंतयत् ॥ २३ ॥ कदा नु भ्रातृहंतारमिंद्रियाराममुल्बणम् ॥ अक्लिन्नहृदयं पापं घातयित्वा शये सुखम् ॥ २४ ॥

रं भावं हित्वा देवत्वं कथं प्राप्ताः इदं नः कथय ॥ २० ॥ २१ ॥ सूत उवाच ॥ हे शौनक ! शुको राज्ञो वचः श्रुत्वोवाच ॥ २२ ॥ श्रीशुक उवाच ॥ हे राजन् ! एकदा हतपुत्रा दितिः पुत्रहंतारमिंद्रं घातयित्वा कदा सुखेन शये ॥ २३ ॥ २४ ॥

[1] सत्रमयनमाश्रयो यस्य तस्य सम्बुद्धिः ।

यो देहस्यार्थे भूतेभ्यो द्रुह्यति स नरके पतति ॥ २५ ॥ अतो येन मे पुत्राः नाशिताः तस्य नाशकरः पुत्रो भूयात् ॥२६॥ सैवं विचार्य नम्रतया शुश्रूषया परमभक्त्या मिष्टभाषणेन कटाक्षावलोकनेन कश्यपं वशमकरोत् ॥२७॥ एवं स्त्रिया जडीकृतः स विद्वानपि बाढमित्याह । तच्चित्रं न ॥२८॥२९॥ यतः प्रजापतिः स्वदेहार्धं स्त्रियं चक्रे यया पुंसां मतिर्हृता ॥ ३० ॥ एवं शुश्रूषितःकश्यपः प्रीतः सन् दितिमाह ॥ ३१ ॥ कश्यप

कृमिविड्भस्मसंज्ञासीद्यस्येशाभिहितस्य च ॥ भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ २५ ॥ आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः ॥ मदशोषक इंद्रस्य भूयाद्येन सुतो हि मे ॥ २६ ॥ इति भावेन सा भर्तुराचचारासकृत्प्रियम् ॥ शुश्रूषयानुरागेण प्रश्रयेण दमेन च ॥ २७ ॥ भक्त्या परमया राजन्मनोज्ञैर्वल्गुभाषितैः॥ मनो जग्राह भावज्ञा सुस्मिताऽपांगवीक्षणैः॥२८॥एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया ॥ बाढमित्याह विवशो न तच्चित्रं हि योषिति ॥२९॥ विलोक्यैकांतभूतानि भूतान्यादौ प्रजापतिः॥ स्त्रियं चक्रे स्वदेहार्धं यया पुंसां मतिर्हृता॥३०॥एवं शुश्रूषितस्तात भगवान्कश्यपः स्त्रिया ॥ प्रहस्य परमप्रीतो दितिमाहाभिनंद्य च ॥ ३१ ॥ कश्यप उवाच ॥ वरं वरय वामोरु प्रीतस्तेऽहमनिंदिते॥स्त्रिया भर्तरि सुप्रीते कः काम इह चागमः॥३२॥ पतिरेव हि नारीणां दैवतं परमं स्मृतम् मानसः सर्वभूतानां वासुदेवः श्रियः पतिः॥ ३३ ॥ स एव देवतालिंगैर्नामरूपविकल्पितैः ॥ इज्यते भगवान्पुंभिः स्त्रीभिश्च पतिरूपधृक् ॥ ३४॥ तस्मात्पतिव्रता नार्यः श्रेयस्कामाः सुमध्यमे॥यजंतेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥ ३५ ॥ सोऽहं त्वयाऽर्चितो भद्रे ईदृग्भावेन भक्तितः ॥ तत्ते संपादये काममसतीनां सुदुर्लभम् ॥३६॥ दितिरुवाच ॥ वरदो यदि मे ब्रह्मन्पुत्रमिंद्रहणं वृणे ॥ अमृत्युं मृतपुत्राऽहं येन मे घातितौ सुतौ ॥ ३७ ॥

उवाच ॥ हे वरोरु ! अहं ते प्रीतोस्मि।भर्तरि प्रीते सति स्त्रीणां मनोरथःको न सिध्येत्॥३२॥सर्वभूतानां वासुदेवो दैवतम् । तथा स्त्रीणां पतिरेव दैवतम् ॥३३॥भगवान् पतिरूपेण स्त्रीभिः पूज्यते॥३४॥ तस्माद् पतिव्रताःस्त्रियः एकभावेन पतिमीश्वरं मत्वा सेवंते॥३५॥सोऽहं त्वया पूजितः। अतो हे भद्रे ! तव कामं संपादये॥३६॥ दितिरुवाच । हे ब्रह्मन् ! अहं मृतपुत्रा । येन मे सुतौ घातितौ तस्येंद्रस्य हंतारं मृत्युहीनं पुत्रं वृणे॥३७॥

तदा कश्यपस्तद्वचो निशम्य तताप । अहो अधर्मो महान् प्राप्तः ॥३८॥ योषिन्मय्या मायया गृहीतचेताः अहं ध्रुवं नरके पतिष्ये ॥३९॥ अतः स्वार्थेऽबुधं मां धिक् ॥४०॥ किंच यस्याः पद्मसदृशं मुखं वचनं श्रवणामृतं हृदयं क्षुरधारोपमं तस्याश्चेष्टितं को वेद॥४१॥स्त्रीणां कोपि प्रियो न । याःस्वार्थे पतिपुत्रादीन् घ्नंति घातयंति च॥४२॥अस्तु मया ददामी त्युक्तं तद् मृषा मा भूत् । इंद्रोपि वधं नार्हति।तत्रेदं योग्यम्॥४३॥एवं



निशम्य तद्वचो विप्रो विमनाःपर्यतप्यत ॥ अहो अधर्मः सुमहानद्य मे समुपस्थितः ॥ ३८ ॥ अहो अद्येंद्रियारामो योषिन्मय्येह मायया ॥ गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम् ॥ ३९ ॥ कोऽतिक्रमोऽनुवर्तत्याः स्वभावमिहयोपितः ॥ धिङ् मां बताबुधं स्वार्थे यदहं त्वजितेंद्रियः ॥ ४० ॥ शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम्॥ हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ४१ ॥ न हि कश्चित्प्रियःस्त्रीणामंजसा स्वाशिषात्मनाम् ॥ पतिं पुत्रं भ्रातरं वा घ्नंत्यर्थे घातयंति च ॥४२ ॥ प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत् ॥ वधं नार्हति चेंद्रोऽपि तत्रेदमुपकल्पते ॥ ४३ ॥ इति संचिंत्य भगवान्मारीचः कुरुनंदन ॥ उवाच किंचित्कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥ कश्यप उवाच ॥ पुत्रस्ते भविता भद्रे इंद्रहा देवबांधवः ॥ संवत्सरं व्रतमिदं यद्यजो धारयिष्यसि ॥ ४५ ॥ दितिरुवाच ॥ धारयिष्ये व्रत ब्रह्मन्ब्रूहि कार्याणि यानि मे॥ यानि चेह निषिद्धानि न व्रतं घ्नंति यानि तु ॥४६॥ कश्यप उवाच ॥ न हिंस्याद्भूत जातानि न शपेन्नाऽनृतं वदेत्॥ न च्छिंद्यान्नखरोमाणि न स्पृशेद्यदमंगलम्॥४७॥नाप्सु स्नायान्न कुप्येत न संभाषेत दुर्जनैः ॥ न वसीताधौतवासः स्रजं च विधृतां क्वचित् ॥ ४८ ॥

विचार्य ॥४४॥कश्यप उवाच॥हे भद्रे !संवत्सरव्रतं यदि धारयिष्यसि तर्हिं तवाभीष्टपुत्रो भविता व्रतवैपरीत्ये देवबांधवोभविष्यति॥४५॥दितिरुवाच॥हे ब्रह्मन् ! व्रतं धारयिष्ये कर्तव्यं कथय॥४६॥कश्यप उवाच॥भूतानि न हिंस्यात् । न शपेत्।मिथ्या न वदेत् । नखरोमाणि न छिंद्यात् । निषिद्धवस्तूनि न स्पृशेत् ॥४७॥जले प्रविश्य न स्नायात् । दुष्टैः सह न संभाषेत । अधौतवस्त्रं न वसीत । पूर्वधृतां मालां न धारयेत् ॥ ४८ ॥

उच्छिष्टं चंडिकान्नं मांसं पिपीलिकादिदूषितान्नं रजस्वलादृष्टं च न भुंजीत । अंजलिना जलं न पिबेत् ॥४९॥ उच्छिष्टा संध्यायां मुक्तकेशा मंडनहीना उपवस्त्रं विना बहिर्न गच्छेत् ॥ ५० ॥ अधौतपादा आर्द्रपादा उदक्छिदाः पश्चिमशिराः नग्ना संध्ययोर्न शयीत ॥ ५१ ॥ धौतवासाः शुचिः सर्वमंगलसंयुता भोजनात् प्राक् गोविप्रान् श्रियमच्युतं च पूजयेत् ॥५२॥सुवासिनीश्च पूजयेत् । पतिमभ्यर्च्य समीपे तिष्ठेत्।हरिं ध्यायेत्

नोच्छिष्टं चंडिकान्नं च सामिषं वृषलाहृतम् ॥ भुंजीतोदक्यया दृष्टं पिबेदंजलिना त्वपः ॥ ४९ ॥ नोच्छिष्टाऽस्पृष्टसलिला संध्यायां मुक्तमूर्धजा ॥ अनर्चिता संयतवागसंवीता बहिश्चरेत् ॥ ५० ॥ नाऽधौतपादाऽप्रयता नार्द्रपान्नो उदक्छिराः ॥ शयीत नापराङ्‌ नान्यैर्न नग्ना न च संध्ययोः ॥५१ ॥ धौतवासाः शुचिर्नित्यं सर्वमंगलसंयुता॥ पूजयेत्प्रातराशात्प्राग्गोविप्राञ्छ्रियमच्युतम्॥५२॥ स्त्रियोवीरवतीश्चार्चेत्स्रग्गंधबलिमंडनैः ॥ पतिं चाऽर्च्योपतिष्ठेत ध्यायेत्कोष्ठगतं च तम् ॥५३॥ सांवत्सरं पुंसवनं व्रतमेतदविप्लुतम् ॥ धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः ॥ ५४ ॥ बाढमित्यभिप्रेत्याथ दिती राजन्महामनाः ॥काश्यपं गर्भमाधत्त व्रतं चांऽजो दधार सा ॥ ५५ ॥ मातृष्वसुरभिप्रायमिंद्र आज्ञाय मानद ॥ शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत्कविः ॥५६ ॥ नित्यं वनात्सुमनसः फलमूलसमित्कुशान् ॥ पत्रांकुरमृदोऽपश्च कालेकाल उपाहरत् ॥५७॥ एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप ॥ प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥ ५८ ॥ नाध्यगच्छद्व्रतच्छिद्रं तत्परोऽथ महीपते ॥ चिंतां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ॥ ५९ ॥

॥ ५३ ॥ एवं पुंसवनं व्रतं संवत्सरं यदि धारयिष्यसि तर्हि शक्रहा पुत्रो भविता ॥ ५४ ॥ सा तद्वचः स्वीकृत्य कश्यपात् व्रतं गर्भं च दधार ॥ ५५ ॥तदेंद्रो मातृष्वसुरभिप्रायं ज्ञात्वा दितिशुश्रूषणं चक्रे ॥ ५६ ॥ नित्यं वनात् फलपुष्पमूलादीनि कालेकाले उपहृतवान् ॥ ५७ ॥इन्द्रस्तस्याः व्रतच्छिद्रं ध्यायन् कापटयेन सेवितवान् ॥ ५८ ॥ यदा व्रतच्छिद्रं नापश्यत् तदा मे शिवं केन स्यात् इति चिंतां प्राप ॥ ५९ ॥

१ कुक्ष्यन्तरगतम् ।

एकदा सोच्छिष्टाऽधौतांघ्रिर्विधिमोहिता संध्यायां सुष्वाप ॥ ६० ॥ इंद्रस्तदंतरं वीक्ष्य योगमायया नासिकाद्वारेण दितेरुदरं प्रविश्य ॥ ६१ ॥ वज्रेण गर्भं सप्तधा चिच्छेद । ते सप्तधा भूताः रुरुदुः। पुनरेकैकं मा रोदीः इत्युक्त्वा सप्तधा चकर्त ॥ ६२ ॥ तदा ते ऊचुः हे इंद्र । वयं मरुतः तव भ्रातरः अस्मान् किं जिघांससि ॥ ६३ ॥ तदेंद्र आह यूयं चेत् मम भ्रातरः तर्हि मा भैष्ट ॥ ६४ ॥ हरेरनुकंपया दितेर्गर्भो न ममार

एकदा सा तु संध्यायामुच्छिष्टा व्रतकार्शिता ॥ अस्पृष्टवार्यधौतांघ्रिःसुष्वाप विधिमोहिता ॥ ६० ॥ लब्ध्वा तदंतरं शक्रो निद्राऽपहृतचेतसः ॥ दितेः प्रविष्ट उदरं योगेशो योगमायया ॥६१॥ चकर्त सप्तधा गर्भं वज्रेण कनकप्रभम् ॥ रुदंतं सप्तधैकैकं मा रोदीरिति तान्पुनः ॥ ६२ ॥ ते तमूचुः पाट्यमानाः सर्वे प्रांजलयो नृप ॥ नो जिघांससि किम् इंद्र भ्रातरो मरुतस्तव ॥ ६३ ॥ मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः ॥ अनन्यभावान्पार्षदानात्मनो मरुतां गणान् ॥ ६४ ॥ न ममार दितेर्गर्भः श्रीनिवासाऽनुकंपया ॥ बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ॥ ६५ ॥ सकृदिष्ट्वादि पुरुषं पुरुषो याति साम्यताम् ॥ संवत्सरं किंचिदूनं दित्या यद्धरिरर्चितः ॥ ६६ ॥ सजूरिंद्रेण पंचाशद्देवास्ते मरुतोऽभवन् ॥ व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ॥ ६७॥ दितिरुत्थाय ददृशे कुमाराननलप्रभान्॥ इंद्रेन सहितान् देवी पर्यतुष्यदनिंदिता॥६८॥अथेंद्रमाह ताताऽहमादित्यानां भयावहम् ॥अपत्यमिच्छंत्यचरं व्रतमेतत्सुदुष्करम् ॥ ६९ ॥॥एकः संकल्पितः पुत्रः सप्तसप्ताऽभवन्कथम् ॥ यदि ते विदितं पुत्र सत्यं कथय मा मृषा॥ ७० ॥

यथा ब्रह्मास्त्रेण भवान् ॥ ६५ ॥ यतो दित्या किंचिदूनं संवत्सरं हरिः पूजितः ॥ ६६ ॥ ते मरुतः इन्द्रेण सह पंचाशद्देवाः अभवन् । एवं ते मातृदोषमपोह्येंद्रेण सोमपाः कृताः ॥ ६७ ॥ ततो दितिरुत्थायेंद्रेण सहा ऽग्निप्रभान् कुमारान् दृष्ट्वा संतोषं प्राप ॥ ६८ ॥अथ दितिःप्राह हे तात । आदित्यानां भयदं पुत्रमिच्छंती व्रतमचरम् ॥ ६९ ॥ ते सप्त सप्तधा कथं बभूवुः । यदि त्वया सत्यं ज्ञातं तर्हि कथय ॥ ७० ॥

इंद्र उवाच ॥ हे अंब ! तव विचारं ज्ञात्वा व्रतच्छिद्रं वीक्ष्योदरं गत्वा गर्भं सप्तधाऽच्छिदम् ॥७१॥ पुनश्च प्रत्येकं सप्तधा अच्छिदम् । तथापि न मम्रुः । मया तदाश्चर्यं वीक्ष्य हरिपूजायाः सिद्धिर्दृष्टा ॥ ७२ ॥ ७३ ॥ ये निष्कामाः हरिमाराधयंति ते स्वार्थकुशलाः ॥७४॥ आत्मप्रदं तमाराध्य विषयभोगं को वृणीते ॥ ७५ ॥ अतो हे मातः ! मम दौरात्म्यं क्षंतुमर्हसि ॥ ७६॥ श्रीशुक उवाच ॥ तदा दितिस्तस्य शुद्धभावं दृष्ट्वैतान् पालय तव साहाय्यं करिष्यंति इत्याह । ततः इंद्रस्तां नत्वा तैः सह दिवं ययौ ॥७७॥ हे राजन् ! तव मरुतां जन्म कथितं भूयः किं कथयामि

इन्द्र उवाच ॥ अंब तेऽहं व्यवसितमुपधार्यागतोऽतिकम् ॥ लब्धांतरोऽच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ॥७१॥ कृतो मे सप्तधा गर्भ आसन्सप्त कुमारकाः ॥ तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ॥७२॥ ततस्तत्परमाश्चर्यं वीक्ष्याध्यवसितं मया ॥ महापुरुषपूजायाः सिद्धिः काऽप्यानुषंगिणी ॥७३॥ आराधनं भगवत ईहमाना निराशिषः ॥ ये तु नेच्छंत्यपि परं ते स्वार्थकुशलाः स्मृताः ॥७४॥ आराध्यात्मप्रदं देवं स्वात्मानं जगदीश्वरम् ॥ को वृणीते गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५ ॥ तदिदं मम दौर्जन्यं बालिशस्य महीयसि ॥ क्षंतुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥७६॥ श्रीशुक उवाच ॥ इन्द्रस्तयाऽभ्यनुज्ञातः शुद्धभावेन तुष्टया ॥ मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ॥ ७७ ॥ एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ मंगलं मरुतां जन्म किं भूयः कथयामि ते ॥ ७८ ॥ इति श्रीभाग० म० षष्ठ० मरुद्गणजन्माऽनुकथनं नामाष्टादशोऽध्यायः ॥ १८॥ छ॥ राजोवाच ॥ व्रतं पुंसवनं ब्रह्मन्भवता यदुदीरितम् ॥ तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति ॥१॥ श्रीशुक उवाच ॥ शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया ॥ आरभेत व्रतमिदं सार्वकामिकमादितः ॥ २ ॥

॥७८ ॥ इति श्रीभागवते षष्ठस्कंधे चूर्णिकायां अष्टादशोऽध्यायः ॥ १८ ॥ ऊनविंशे तु यत्प्रोक्तं कश्यपेन दितेर्व्रतम् । तदेव विवृतं लोके हिताय हरितोषणम् ॥ १ ॥ राजोवाच ॥ हे ब्रह्मन् ! भवता यत् पुंसवनं व्रतं कथितं तत्प्रकारं ज्ञातुमिच्छामि ॥ १ ॥ श्रीशुक उवाच ॥ मार्गशीर्षशुक्लपक्षप्रतिपदि स्त्री भर्तुरनुज्ञया सार्वकामिकं व्रतमारभेत ॥ २ ॥

पूर्वं मरुतां जन्म निशम्य ब्राह्मणाज्ञया स्नात्वा श्वेतवस्त्रालंकारान् धृत्वा प्रातर्लक्ष्म्या सह विष्णुं पूजयेत्॥३॥पूजादौ नमस्कारो निरपेक्षाय पूर्णकामाय महाविभूतिपतये ते नमोऽस्त्विति॥४॥हे ईश ! त्वं सर्वगुणैर्युक्तः॥५॥हे विष्णुपत्नि ! हे महामाये ! ते नमोऽस्तु ।ॐनमो भगवते महापुरुषायेति मंत्रेणावाहनादिषोडशोपचारैः पूजयेत् । अनेनैव मंत्रेणाऽग्नौ हविश्शेषेण द्वादशाहुतीर्जुहुयात् ॥६॥७॥ एवं भक्त्या श्रियं विष्णुं च नित्यं

निशम्य मरुतां जन्म ब्राह्मणाननुमंत्र्य च ॥ स्नात्वा शुक्लदती शुक्ले वसीतालंकृतांऽबरे ॥ पूजयेत्प्रातराशात्प्राग्भगवंतं श्रिया सह ॥ ३ ॥ अलं ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते ॥ महाविभूतिपतये नमः सकलसिद्धये ॥ ४ ॥ यथा त्वं कृपया भूत्या तेजसा महिनौजसा ॥ जुष्ट ईशगुणैः सर्वैस्ततोसि भगवान्प्रभुः ॥ ५ ॥ विष्णुपत्नि महामाये महापुरुषलक्षणे ॥ प्रीयतां मे महाभागे लोकमातर्नमोऽस्तु ते ॥ ६ ॥ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिर्बलिमुपाहराणीति ॥ अनेनाऽहरहर्मंत्रेण विष्णोरावाहनाऽर्घ्यपाद्योपस्पर्शनस्नानवासउपवीतविभूषणगंधपुष्पधूपदीपोपहाराद्युपचारांश्च समाहित उपहरेत्॥ हविश्शेषं तु जुहुयादनले द्वादशाऽहुतीः॥७॥ॐनमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ॥ श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ ॥ भक्त्या संपूजयेन्नित्यं यदीच्छेत्सर्वसंपदः ॥ ८ ॥ प्रणमेद्दंडवद्भूमौ भक्तिप्रह्वेण चेतसा ॥ दशवारं जपेन्मंत्रं ततःस्तोत्रमुदीरयेत् ॥९॥ युवां तु विश्वस्य विभूः जगतः कारणं परम् ॥ इयं हि प्रकृतिः सूक्ष्मा माया शक्तिर्दुरत्यया ॥ १० ॥ तस्या अधीश्वरः साक्षात्त्वमेव पुरुषः परः ॥ त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ॥११॥ गुणव्यक्तिरियं देवी व्यंजको गुणभुग्भवान् ॥ त्वं हि सर्वशरीर्यात्मा श्रीः शरीरेंद्रियाशया ॥ नामरूपे भगवति प्रत्ययस्त्वमपाश्रयः ॥ १२ ॥

संपूज्य ॥८ ॥ भूमौ दंडवत् प्रणम्य तन्मंत्रं दशवारं जपित्वा प्रार्थयेत् ॥९॥ युवां सर्वजगतः कारणम् । इयं माया शक्तिः ॥१०॥ तस्याः साक्षात्त्वमीश्वरोसि ॥ ११ ॥ त्वं सर्वशरीरिणामात्मा नामरूपयोः प्रकाशः आधारश्चासि ॥ १२ ॥



१ नामरूपयोः प्रकाशः ।

युवां त्रिलोकस्य वरदौ । अतो मम मनोरथं कुरुताम् ॥ १३ ॥ एवं स्तुत्वाऽऽचमनं दत्त्वा पुनरर्चयेत् ॥ १४ ॥ ततो भक्त्या स्तोत्रेण स्तुत्वा यज्ञोच्छिष्टमवघ्राय पुनरर्चयेत्॥ १५ ॥ परमभक्त्या पतिं च सेवयेत् । पतिश्च स्वयं प्रेमयुक्तः सन् पत्न्या अनुकूलो भवेत् ॥ १६ ॥ यदा पत्न्याः रजस्वलादिदोषे जाते भर्ता सर्वकर्माणि कुर्यात् । एकेनापि कृतमुभयोरपि फलं भवति ॥ १७ ॥ इदं विष्णोर्व्रतं कथंचन न छिंद्यात् ।

यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ॥ तथा म उत्तमश्लोक संतु सत्या महाशिषः ॥१३॥ इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह ॥ तन्निस्सार्योपहरणं दत्त्वाऽऽचमनमर्चयेत् ॥ १४ ॥ ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा ॥ यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥ १५ ॥ पतिं च परया भक्त्या महापुरुषचेतसा ॥ प्रियैस्तैस्तैरुपनमेत्प्रेमशीलः स्वयं पतिः ॥ बिभृयात्सर्वकर्माणि पत्न्या उच्चावचानि च ॥ १६ ॥ कृतमेकतरेणापि दंपत्योरुभयोरपि ॥ पत्न्यां कुर्यादनर्हायां पतिरेतत्समाहितः॥१७॥विष्णोर्व्रतमिदंबिभ्रन्न विहन्यात्कथंचन॥ विप्रान्स्त्रियोवीरवतीःस्रग्गंधबलिमंडनैः॥अर्चेदहरहर्भक्त्या देवं नियममास्थितः॥१८॥उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः॥अद्यादात्मविशुद्ध्यर्थं सर्वकामर्द्धये तथा॥१९॥एतेनपूजाविधिना मासान्द्वादश हायनम्॥नीत्वाऽथोपचरेत्साध्वी कार्त्तिके चरमेऽहनि ॥२०॥ श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् ॥ पयः शृतेन जुहुयाच्चरुणा सह सर्पिषा ॥पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः ॥ २१ ॥ आशिषः शिरसाऽऽदाय द्विजैः प्रीतैः समीरिताः ॥ प्रणम्य शिरसा भक्त्या भुंजीत तदनुज्ञया ॥ २२ ॥ आचार्यमग्रतः कृत्वा वाग्यतः सह बंधुभिः ॥ दद्यात्पत्न्यै चरोः शेषं सुप्रजास्त्वं सुसौभगम् ॥ २३ ॥

ततो विप्रान् सुवासिनीश्च स्रग्गंधोपहारैर्नित्यमर्चयेत् ॥ १८ ॥ एवमुद्वास्य तन्निवेदितान्नमश्नीयात् ॥ १९ ॥ एवं द्वादश मासान् कृत्वा कार्त्तिकांतेऽमावास्यायामुपवसेत् ॥ २० ॥ श्वः प्रातः स्नात्वा पूर्ववद् विष्णुं संपूज्य पायसेन घृतमिश्रचरुणा यथाविधि द्वादशाहुतीर्जुहुयात् ॥ २१ ॥ द्विजाशीर्वादं गृहीत्वा प्रणम्य ॥ २२॥ आचार्यमग्रतः कृत्वा वाग्यतो बंधुभिः सह भुंजीत ॥ ततश्चरोः शेषं पत्न्यै दद्यात् ॥ २३ ॥

एवं कृते पुमानीप्सितार्थं लभते स्त्री सुसौभाग्यं श्रियं सुप्रजाः यशश्च लभते ॥ २४ ॥ कन्योत्तमं वरम् । विधवा सद्गतिम् । मृतप्रजा जीवत्सुता भवति । दुर्भगा सुभगा भवेत् ॥ २५ ॥ कुरूपा सुरूपं लभते । यो देवपितृकर्माणि तदिदं पठेत् तस्य देवपित्रोरनंततृप्तिर्भवेत् ॥ २६ ॥ अग्निः



एतच्चरित्वा विधिवद्व्रतं विभोरभीप्सितार्थं लभते पुमानिह ॥ स्त्री त्वेतदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिं यशो गृहम् ॥२४॥ कन्या च विंदेत समग्रलक्षणं वरं त्ववीरा हतकिल्बिषा गतिम् ॥ मृतप्रजा जीवसुता धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २५ ॥ विंदेद्विरूपा विरुजा विमुच्यते य आमयावींद्रियकल्पदेहम् ॥ एतत्पठन्नाऽभ्युदये च कर्मण्यनंततृप्तिः पितृदेवतानाम् ॥ २६ ॥ तुष्टाः प्रयच्छंति समस्तकामान्होमाऽवसाने हुतभुक्छ्रीर्हरिश्च राजन्महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत्ते ॥ २७ ॥ इति श्रीभागवते महापुराणेऽष्टादशसाहस्र्यांपारमहंस्यां संहितायां षष्ठस्कंधे पुंसवनव्रतकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ समाप्तोऽयं षष्ठः स्कंधः ॥ ६ ॥

श्रीर्हरिश्च सर्वान् कामान् ददाति । हे राजन् ! मरुतां जन्म दितेर्व्रतं च ते कथितम् ॥ २७ ॥ इति श्रीभागवते षष्ठस्कन्धे चूर्णिकायां एकोनविंशोऽध्यायः ॥ १९ ॥ अनुमानेन चूर्णिकाग्रन्थसंख्या ६४० । अस्मिन् स्कन्धे वृत्ताऽनुष्टप्गद्यश्लोकग्रंथसंख्या--८४६ ॥

॥ समाप्तोऽयं षष्ठस्कन्धः ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालये मुद्रितम् ।

संवत् १९८० शके १८४५.

५२

॥ इति सच्चूर्णिके श्रीमद्भागवते षष्ठस्कन्धः समाप्तः ॥